श्री लक्ष्मीहयवदनपरब्रह्मणे नमः



श्रीश्रीनिवासाचार्यप्रणीत

श्री उमामहेश्वरशास्त्रिकृत ' विरोधवरूथिनी ' परिशीलनरूपः

# वि रो ध नि रो धः

' श्रीभाष्यपादुकाऽपरनामधेयः '



श्रीमन्महीशूरराजधान्यां विद्योतमान श्रीब्रह्मतन्त्रस्वतन्त्र-
परकालास्थान्यां (३३) तमे पदे मूर्धाभिषिक्तैः
श्रीलक्ष्मीहयग्रीवदिव्यपादुकासेवक श्रीमभिनवरङ्गनाथब्रह्म
तन्त्रस्वतन्त्रपरकालमहादेशिकैः (शा. १८३९) प्रतिष्ठापितया
श्रीमद्वेदान्तदेशिकविहारसभया स्वीयमुद्राक्षरै-
र्मुद्रयित्वा प्रकाशितः

विजयतेतमाम्

१९६५

श्री लक्ष्मीहयवदनपरब्रह्मणे नमः



श्रीश्रीनिवासाचार्यप्रणीत

श्री उमामहेश्वरशास्त्रिकृत ' विरोधवरूथिनी ' परिशीलनरूप·

# वि रो ध नि रो धः

' श्रीभाष्यपादुकाऽपरनामधेयः '



श्रीमन्महीशूरराजधान्यां विद्योतमान श्रीब्रह्मतन्त्रस्वतन्त्र-
परकालास्थान्यां (३३) तमे पदे मूर्धाभिषिक्तैः
श्रीलक्ष्मीहयग्रीवदिव्यपादुकासेवक श्रीमघिनवरङ्गनाथब्रह्म
तन्त्रस्वतन्त्रपरकालमहादेशिकैः (शा.१८३९) प्रतिष्ठापितया
श्रीमद्वेदान्तदेशिकविहारसभया स्वीयमुद्राक्षरै-
र्मुद्रयित्वा प्रकाशितः

विजयतेतमाम्

१९६५

श्रीः

श्रीलक्ष्मीयवदनपरब्रह्मणेनम.

श्रीमतेश्रीनिवासायनमः

श्रीमतेरामानुजायनम.

श्रीमतेनिगमान्तमहादेशिकायनम

श्रीमदभिनव निगमान्तमहादेशिक श्रीनिवासाचार्य विरचितः

# विरोधनिरोधः

## —श्री भाष्य पादुका—

प्रत्यस्तहेयं प्रणतैरुपेय श्रुत्यन्तगेयं सुरभागधेयम् ।
श्रेयोऽभ्युपेय चिदचित्स्वकाय ब्रह्माद्वितीयं प्रणमाम्यमेयम् ॥ १ ॥

तत्तन्मतोद्वर्तनसूत्रधारं गुणैरुदार कुमनीषिदूरम् ।
त्रय्यन्त पर्यन्तलसद्विलासं व्यासं त मासं प्रणतः प्रसत्यै ॥ २ ॥

श्रुत्यन्तभाष्यं सुगुणैकभूष्यं सर्वैरदूष्यं सहसाऽनुभाष्य ।
शिष्य विशिष्याच्युतमन्वशाद्यः तोष्यामि तं भाष्यकृत कृतार्थः ॥ ३ ॥

वाचामगोचराचार चातुरी चारु चेतसे ।
प्राचीनां शिरसो वाचामाचार्यायास्तु मे नतिः ॥ ४ ॥

अधीत्य तन्त्रं सकलस्वतन्त्रादध्यैषि भाष्य विबुधाप्रधृष्यम् ।
यस्मादकस्मात्कृपया प्रसन्नं तं श्रीनिवासाध्वरिणं वृणीय ॥ ५ ॥

मदग्रजानुग्रहलब्धबुद्धि र्विविच्य रुच्या परिभाष्य भाष्यम् ।
विरोधिनाऽत्रोद्गलितान्विरोधान् धुनोमि तेनाशु धिनोमि साधून् ॥ ६ ॥

आम्नाय विद्वेषि जनाग्रयशिष्या जनास्तदर्थ बहुवित्समर्थम् ।
द्विषन्तिचेद्धन्त किमत्र चित्र तेहि त्रिवर्गाय हतापवर्गाः ॥ ७ ॥

भ्रष्टाहि शिष्टप्रवरोपजुष्टं दुष्टा निकृष्टाध्वनि कामहृष्टाः ।
इष्टन्त्यजन्त्याशु भजन्त्यनिष्टं कितैरतुष्टै रपथप्रविष्टै ॥ ८ ॥

भौमाम्सुरा भाष्यसुधां पिबन्तस्तृप्यन्ति कुप्यन्ति यतोऽसुरास्ते ।
इयान्विशेषस्तदलाभरुष्टाः पूर्वे परे तां परिभूय दुष्टाः ॥ ९ ॥

यद्यप्युदग्रैरिह युक्तिवर्गैर्मेदग्रजैरुद्ग्रथितं तथाऽपि ।
यद्विस्तृत सङ्कुचितच तत्र व्यास्थ समास्थ तदिहेत्युदास्थ ॥ १० ॥

इह खलु भगवान् सूत्रकृत् स्वेन विचिचारयिषित कारणब्रह्मैकविषय प्रदिदर्शयिषुर्ब्रह्मजिज्ञास्यं प्रतिज्ञाय तल्लक्षण जगत्कारणत्वं चोपादिक्षत् । 'अथातो ब्रह्मजिज्ञासा जन्माद्यस्य यत' इति । व्यपेक्षा गमक—यत्तद्योगेन कारणत्व ब्रह्मत्वयोरुद्देश्यतावच्छेदकविधेयत्वे समदीदृशच्च । एव 'कारणन्तु ध्येय' इति श्रुत्यभिहितापवर्गहेतु—ध्यानविषयतावच्छेदकं प्रकृतजिज्ञास्यतावच्छेदकमुपाक्षिपता निश्श्रेयस निश्श्रेणिकेय जिज्ञासेति निरणायि । तच्च कारण ब्रह्म चिदचिद्विशिष्टमिति 'कि कारण ब्रह्मे' तिप्रश्ने 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिम्' इत्युपक्रम्य 'भोक्ता भोग्यं प्रेरितारच मत्वा सर्व प्रोक्तं त्रिविधं ब्रह्म मेतत्' इत्युपसहारादवगम्यते ॥ अत्र प्रेरणोक्त्या निमित्तत्व प्रेर्ययोर्भोक्तृभोग्ययोस्तच्छरीरत्व तेनच तद्विशिष्टस्य बृहणौचित्यं तस्योपादानताच सूचिता ॥ ननु बृहत्व बृहणत्वे ब्रह्मपदप्रवृत्तिनिमित्ते 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म' 'बृहत्वात् बृहणत्वाच्च तद्ब्रह्मेत्यभिधीयते' इति श्रुतिस्मृतिभ्यां उपपादिते नेन चिदचितो स्त. अतस्तयो कथ तत्प्रतिपाद्यता । उच्यते—नायमस्ति नियमः यो यत्पदप्रवृत्तिनिमित्तानाश्रयः स तत्पदाप्रतिपाद्यः इति—गोपदप्रवृत्तिनिमित्तानाश्रयस्यापि गोत्वस्य गोस्तदाश्रयस्येव तत्पदप्रतिपाद्यतादर्शनात् । विशेष्यस्य तदाश्रयत्वन्तु इहाप्यक्षुण्णम् ॥

अथोच्येत—न ब्रूम. प्रवृत्तिनिमित्तानाश्रयस्यावाच्यत्वमिति अपितु शक्तिग्रहपदार्थोपस्थित्योस्समानप्रकारकत्वनियमात् युक्त गोवद्गोत्वस्यापि तत्पदजन्यबोधे प्रकारत्व चिदचितोरतथाभूतयो· कथ ब्रह्मपदजन्यबोधे प्रकारत्वम् बृहत्वबृह्मणत्वयोरेव निमित्ततया शक्तिग्रहप्रकारतयाऽवगमात् इति । न स्यात् इदमत्र शक्यमिति शक्ति ग्रहे पदार्थस्य प्रकारतया समानप्रकारकत्वस्यावधारणगर्भस्य पदार्थोपस्थितौ अतत्प्रकारिकाया व्यभिचारात् । अनवधारणगर्भस्य तद्विषयविषयकत्वस्येहाप्यनपायित्वात् । तद्विषयताव्यापकविषयताकत्वस्य शब्दाननुविद्धपदार्थोपस्थितिवादिमते काप्यसत्वात् ॥

अथ तदविषयाविषयकत्वं विवक्षितं तच्च सर्वत्राक्षत इहतु चिदचितो शक्तिग्रहाविषययोर्नतत्पदजन्यबोधविषयतेतिचेत्—अत्रेदंवक्तव्यं कुतस्तयोश्शक्तिग्रहाविषयता ? किं प्रमाणाभावात्—उत प्रवृत्तिनिमित्तभिन्नत्वेसति तदनाश्रयत्वात् नाद्यः उक्तश्रुतेर्विशिष्टग्राहिकायास्सत्वात्। नद्वितीयः ऋत्विगादिपदे व्यभिचारात् ऋतुयजनानिमित्तकोह्यसौ ऋत्विक् शब्द. नतद्विशिष्टमात्रमभिधत्ते। किंतु तद्घटकश्रौतबुद्धिविशिष्टमपि । तद्घटकत्वात् तत्र तदभिधानमस्तु ब्राह्मणोऽह मित्यादौ जात्याश्रयघटकशरीरादिवदितिचेत्। सत्यं तदिहापि बृहत्वबृंहणत्वाश्रय ताघटक चिदचितोरपि तत्तदाश्रयस्येव वाच्यता दुर्वारा ॥

यदिच वस्तुतः श्रौतबुद्धिविशिष्टस्यैव प्रवृत्तिनिमित्तवैशिष्ट्यात् अस्तु वाच्यता नतु तस्य वाच्यकोट्यन्तर्भावः । नवा तत्पदजन्यबोधे तस्य प्रकारता । नहि प्रवृत्तिप्रयोजकस्य सर्वस्य वाच्यकोट्यन्तर्भावः । पङ्कजपदप्रवृत्तिनिमित्तपङ्कजनिकर्तृताप्रयोजक पङ्कादेस्तत्पदवाच्यानन्तर्भावात् । नवा तदाश्रयताघटकस्य तत्पदजन्यबोधविषयता । द्विरेफपदनिमित्त रेफद्वयाश्रयताघटक भ्रमर पदादेः तत्पदजन्यबोधाविषयत्वात् । ब्राह्मणोऽहमित्यादौतु शरीरस्यात्मापृथक्सिद्धत्वात् घटकस्यापि तत्पदजन्यबोधविषयता। दृश्यतेहि नीलादिपदानां गुण गुण्येकशक्तिवादिमते तत्तत्पदनिमित्तनीलत्वाद्याश्रयताघटकनीलगुणादेरपि तत्प दवाच्यतेति विभाव्यते—तर्हि तद्वदेव चिदचितोरपि तदाश्रयताघटकयोः तच्छरीरतया तदपृथक्सिद्धयोरस्तु तत्पदवाच्यकोट्यन्तर्भावात्तत्पदजन्यबोधविषयता ॥

अथस्यात् अस्तु गुणशरीरयोरन्यत्र तत्तन्निमित्ताश्रयताघटकतया वाच्यकोट्यन्तर्भावः तयोस्तज्जात्याश्रयत्वात् विनाताभ्यां विशेषस्य तदनाश्रयत्वाच्च । इहतु तद्विपरीत चिदचितोस्तदनाश्रयत्वात् विनाताभ्यां ब्रह्मणस्तदाश्रयत्वाच्चेति। चिद्वस्तुनोहि नास्त्येव बृहत्वम्। अचितस्तु यद्यप्यस्त्यापेक्षिकतत् तथाऽपि नतत्पद प्रवृत्तिनिमित्तम् तद्वत्सु त्र्यणुकादिषु बृहन्महदादिशब्दवद्ब्रह्मशब्दाप्रयोगात्। कि तु निरतिशयबृहत्वं तच्च नाचिद्वस्तुनि । ब्रह्मणितु सर्वव्यापके तदस्ति सत्य सर्व व्याप्य वर्तमानत्वाद्ब्रह्मणः—अतएव सर्व तद्घटकं व्याप्यनिरूपितत्वाद्व्याप्ते. । व्याप्यंच चिदचिद्रूप जगदेव । 'अन्तर्बहिश्च तत्सर्व व्याप्यनारायणस्थित' इति श्रुतेः। कोचबृहत्वमपरिच्छिन्नत्व। तच्च देशकालाभ्यामिव वस्तुगुणाभ्यामपि व्यवच्छेदाभावः । तत्र गुणापरिच्छिन्नत्वं सर्वगुणपूर्णत्व । तथा वस्त्वपरिच्छि

न्नत्व स्वापृथक्सिद्धसर्ववस्तुकत्वम्। तच्च 'नेहनानाऽस्ति किंचन' 'सर्वं न पराद्वाद्योऽन्यत्रात्मनस्सर्वं वेद' इत्यादिभिरवगम्यते। अतो गुणानामिव वस्तूनामपि ब्रह्मशब्दान्तर्भावो दुर्वारः॥ किंच बृहत्त्वं हि 'सत्यज्ञानानन्त्याय कल्पते' इति श्रुतिप्रतिपन्नाचित्सम्बन्ध निबन्धनसङ्कोचनिवृत्तिपूर्वकं निरतिशयज्ञानविकासात्मकानन्त्यावहत्वौपाधिक क्षान्तिकारुण्याद्यनन्तकल्याणगुणवत्त्वम्। तत्र गुणानामिव चिदचितोरपि घटकता स्फुटैव॥

किंच उपासनं ब्रह्मविषयकं तत्रच शान्तिरङ्गमिति 'शान्त उपासीत' इत्यस्मादवगम्यते। साच चिदचितोरुपास्यान्तर्गतत्वान्न किञ्चिद्विषयकद्वेषस्याप्युपास्य द्वेषे पर्यवसानादिति 'सर्वंखल्विदं ब्रह्म तज्जलानिति' इति हेतूपादानादवगम्यते। अतएवाकृत्स्नोपासनं निन्द्यते 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति नसवेद अकृत्स्नोह्येषः' इति। अतो ब्रह्मोपासनस्य कृत्स्नविषयकत्वं ब्रह्मशब्दार्थे कृत्स्नान्तर्भावादेव। अतएव 'ब्रह्मैवेदं विश्वम्' इत्यादि सामानाधिकरण्यनिर्देशाः मुख्या उपपन्नाः। अतएव तद्गतकारणत्वं निमित्ताभिन्नोपादानत्वरूपमिति 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति समन्वयाध्यायोपक्रान्तं कारणत्वमन्ते उपसंहरति। अत इहोक्तं कारणत्वमुभयरूपमित्युन्नीयते। तच्चब्रह्मणश्चिदचिद्विशिष्टरूपतामन्तरेण नघटते। तच्चोपादानत्वं परिणामरूपमिति 'परिणामात्' इति सूत्रयता सूत्रकृतैव प्रादर्शि। तच्च न स्वरूपेण निर्विकारत्वश्रुतिविरोधात् अपितु स्वशरीरभूतचिदचिद्द्वारकम्। दृश्यतेहि 'न जायते म्रियते' इत्यादिभिः जन्मनाशविरहित्वेनावधृतस्यापि जीवस्य शरीरद्वारकं जन्ममरणादि। इष्यतेच सर्वैः एवं स्वतो नित्यनिर्विकारमपि ब्रह्म शरीरभूतचिदचिद्द्वारा कार्यं विकारिचेति श्रुतिवचनादवगम्यते। यथाहि श्रुतिर्ब्रह्मणो नित्यनिर्विकारतामवगमयति, तथा तस्यैव तद्द्वारकस्योपादानतामपि बोधयति। 'यतोवा इमानि भूतानि जायन्ते' 'आत्मनआकाशस्सम्भूतः' 'तदैक्षत बहुस्यां' 'सोऽकामयत बहुस्यां' 'तदात्मानंस्वयमकुरुत' 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिच' 'तस्मादेतद्ब्रह्म नामरूपमन्नंच जायते' 'कर्तारमीशंपुरुषं ब्रह्मयोनिं' इत्यादिका। अत्रहि यतइति पञ्चमी 'जनिकर्तुः प्रकृतिः' रिति सूत्रानुशिष्टा प्रकृतिशब्दितोपादानवाचिका प्रकृतिशब्दोह्युपादाने प्रसिद्धः। नच प्रसिद्धत्यागेऽस्ति मानम्। भाष्यकारीय प्रत्याख्यानस्योपादानैकान्त्यज्ञापकत्वात् अतएववृत्तिस्थोदाहरणान्तरस्य 'पुत्रात्प्रमोदो जायते' इत्यादेर्भाष्य विरोधेन

चिन्त्यत्वात् । तस्येष्टत्वे हि ध्रुवसूत्राविषयतत्सिद्धये सूत्रमावश्यकमिति कथं तत्प्रत्याचक्षीत । अतएव तदनुसारि कविकाव्यादि प्रयोगोऽपि प्रत्युक्त ॥

अस्तुवा कारणसामान्यपरता किंतया तवेष्टं सिध्येत्—निमित्तोपादानसाधारणत्वसिद्धेरुपादानत्वाविरोधित्वात्। इहहि ' यत्प्रत्ययन्त्यभिसंविशन्ति इति सुप्तिङन्तपदाभ्यां कारणावस्थापत्तिरूपोलय. कारणे भूतानां श्रूयते। नच तादृक्कारणमन्यदुपादानादिष्टं दृष्टवा । अतएव कालस्य कारणस्य सतो लयाधिकरणत्वेऽप्यनुपादानता दृष्टेति केषांचिदाशा दूरनिरस्ता । तत्र कारणावस्थापत्तिरूपलयादर्शनात् । एवं ' आत्मन आकाश ' इत्यत्रापि ' आकाशाद्वायु. ' इत्युत्तरवाक्यस्थोपादान पञ्चम्यनुसारेण अग्रथप्रायन्यायेनोपादान पञ्चम्येवोचिता । नच तत्रापि तत्त्वे विवदितव्यम् । पृथिव्यप्सु प्रलीयते आपस्तेजसिलीयन्ते, तेजो वायौ लीयते वायुराकाश ' इति लयोक्तिविरोधात् । एतेनाकाशादेरपरिणतांशं निमित्तमादाय पञ्चमीनिर्देश· ' गोलोमाऽविलोमभ्यो दूर्वाजायन्ते शृङ्गाच्छिरोजायते ' इत्यादावप्येवमेवेति केषाञ्चिदुक्तिरपास्ता ॥

अपरिणतांशस्य निमित्तस्य तथाविधे निमित्तान्तरे लयायोगेनापरिणतांशावस्थानप्रसङ्गात् अतस्सर्वमुपादानमित्येव वक्तव्यम् । किञ्चापरिणतांशः कार्योत्पत्तौ निमित्तमिति कुतः कल्प्यते—नतावदन्वयव्यतिरेकाभ्यां सर्वपरिणामेऽपि कार्यदर्शनात्। कारणतावच्छेदकरूपावच्छिन्नत्वादरण्यस्थ दण्डादेरिवेतिचेत् अस्तु तर्हि उपादानताऽवच्छेदकरूपावच्छिन्नत्वादुपादानतैव । उपादानावच्छेदकरूपेणैव निमित्तताकल्पनौचित्यादिति यत्किञ्चिदेतत्। सम्भूतइति निर्देशश्चोपादानतागमक· । सूक्ष्मावस्थस्य स्थूलावस्थापत्तिर्हि सम्यक्भाव· । एतेन समुद्रादेश्चन्द्राद्युपादानत्वाव्यतिरेकात्' यदिन्दोरन्वेति व्यसनमुदयवानिधिरपामुपाधिस्तत्रायं जयति जनिकर्तु· प्रकृतिता ' इति मुरारिप्रयोगोऽप्युपादानपरएव । एवं पित्रादेरपि पुत्राद्युपादानत्वमविरुद्धम् । अतएव धर्मशास्त्रकारै· ' पुमान् पुंसोऽधिकेशुक्ले स्त्रीभवत्यधिके स्त्रिया ' इति शास्त्रमनुरुध्य पुत्रदुहित्रोः पितृमातृ भूयोऽवयव साम्यात्पैतृकं पुत्रगामि मातृकं दुहितृगामीति नैयायिकमिदं नवाचानिकमित्युच्यते । अतएवोर्णनाभेरपि तन्तूपादानत्वात् ' यथोर्णनाभिस्सृजते गृह्णते च ' इत्यारभ्य ' तथाऽक्षरात्सम्भवतीह विश्वम् ' इति श्रवणेन ब्रह्मण उपादानत्वं दृष्टान्तविधयाऽपि प्रदर्शितम् ॥

यत्त्वेवं सति ऊर्णनाभ्यादिनाशे तन्त्वादिनाशप्रसङ्ग कैश्चिद्दूषणत्वेनोक्तः सतु कारणावस्थापत्तिरेव कार्यस्य लयइति वादिनं वेदान्तिनंप्रति कथं हृदयमारूढमिति नविद्मः । नैयायिकमतेऽपि न सर्वत्र समवायिकारणविनाशः कार्यविनाशे हेतुः द्व्यणुक द्वित्वादि विनाशेषु व्यभिचारान्नित्याकाशादिसमवायिकारणकेषु शब्दज्ञानादिषु तदभावाच्च । द्रव्यं नित्यं अवस्थात्वनित्येति वदतो वेदान्तिनो मृत्कयाचिदाकृत्या पिण्डोभवतीति द्रव्यनित्यत्वमङ्गीकृत्याकृत्यानित्यतां वदतां मध्यस्थानांच मते द्रव्यविनाशस्यैवाभावाच्च । अतो यत्किञ्चिदेतत् । आत्मशब्दोहि ब्रह्मशब्दवद्विशिष्टपरः । तथाच सौदर्शनान्यक्षराणि ‘ सद्ब्रह्मशब्दौ विशिष्टस्य सत्वबृहत्वयोगाद्विशिष्टोपस्थापनसमर्थौ आत्मशब्दश्चाप्तिरूपप्रवृत्तिनिमित्तस्य व्याप्यसापेक्षत्वाद्विशिष्टोपस्थापकः इति । एवञ्च शब्दसामर्थ्यमाश्रित्योक्तम् । असामर्थ्यमनालोच्य पक्षान्तरमप्युक्तम् । श्रुत्यन्तरबलेन स्वरूपविकारासम्भवान् कार्योपयुक्तमनुपयुक्तमपि विशेषणं पृषदाज्यनयेनार्थस्वभावेन सन्निधापितमनुसन्धेयमिति ॥

एवं तदैक्षत बहुस्यां प्रजायेय इत्यत्रापि तच्छब्दः सच्छब्दसमानार्थत्वाद्विशिष्टपरः । बहुस्यामित्युक्ते रुपादानत्वं सिद्धम् । अतएव ‘ तेजोऽसृजत ’ इत्यत्र तेजआदयश्शब्दास्तच्छरीरकपरमात्मपराः । तदैक्षतेतिवत्तत्तेज ऐक्षतेति सङ्कल्पश्रवणात् तदेतदाह सूत्रकारः ‘ गौणश्चेन्नात्मशब्दात् इति ॥

यत्तु बहुस्यामिति नियामकरूपबहुभावाभिप्राय तेज आदयस्तु नियाम्यास्सृज्यन्ते अतएव सृष्टिसङ्कल्पयोः गुरुःस्यामिति सङ्कल्प्य शिष्यसम्पादनइवावैयधिकरण्यमिति कल्पनं–तन्न ‘ एकोमनीषी निष्क्रियाणां बहूनामेकं रूपंबहुधा य करोति इति समानार्थकश्रुत्यन्तरविरोधात् । अत्रहि संकुचितावस्थानां चेतनानां सम्बन्ध्येकत्वावस्थमचिद्रूपं बहुधा करोतीति जीवसम्बन्ध्येकतापन्नप्रकृतिगतं बहुत्वमुच्यते । तदिहाप्यचिद्गतैव प्राक्सृष्टेरेकत्वावस्था सृष्टिकाले बहुत्वावस्थाच वक्तव्यायुज्यते तथा व्याख्यातुम् । उपक्रमेहि सद्गतमेकत्वमवगम्यते तच्च नविशेष्यगतं इदानीमपि तत्त्वा नपायात् नापि विशेषणचेतनगतं अग्रेपि तदभावात् । किंतु विशेषणाचेतनगतं अतस्तत्प्रतिद्वन्द्वि बहुत्वमपि तद्गतं वाच्यं अतो न नियामकरूपगतंतत् सत्कार्यवादेन जीवानां नित्यत्वेन प्राक्सृष्टेरपि तद्बहुत्वसत्वात् । अतएव तान्नियामकरूपबहुत्वस्य तदानीमप्यनपायात् एकमित्यस्य तत्परत्वायोगात् । कथञ्चित्तत्परत्वेऽपि ‘ बहुस्यां प्रजायेय ’ इत्यन्यतरवैयर्थ्याच्च ।

एकेनैव तदुत्पत्तिसिद्धे । अस्मन्मतेतु हेतुहेतुमतोर्लिङ्भ्यां बहुरूपतापत्ते· फलत्वेन सृष्टेस्तद्धेतुत्वेन निर्देशादुभयमर्थवत् ॥

अतएवैतत्समानाकारे तैत्तरीयवाक्ये 'सोऽकामयत बहुस्यां प्रजायेय' इत्युक्त्वा 'सतपोऽतप्यत, सतपस्तप्त्वा, इदॅंसर्वमसृजत, यदिदं किंच' इत्यखिलस्य सृष्टिमुक्त्वा 'तत्सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य, सच्चत्यच्चाभवत्' इत्यादिना तत्फलतया तद्रूपतापत्तिरुच्यते अतएवच कैश्चिदुक्ता पौनरुक्त्यशङ्काऽपि निरस्ता । तथाऽपि तत्तत्स्वभावासाङ्कर्यं दर्शयितुं 'निरुक्तंचानिरुक्तञ्च' इत्यादि अतो नद्वैयर्थ्यमापि अत्राचिद्वत स्वरूपविकार· चिद्वतस्तु स्वभावविकार· परमात्मनस्तु तदुभयशून्यत्वान्निर्विकारत्वमिति दर्शयितु 'सत्यंचानृतंच सत्यमभवत्' इत्युच्यते । यद्यप्यसौ तदुभयशरीरकत्वात्तद्रूपोऽभवत् तथाऽपि स्वरूपस्वभाव विकारयोस्तद्वतत्वात्स्वय तद्रूपशून्यत्वात् सत्यमेवाभवदित्यर्थ· । तथाच श्रुत्यन्तरं 'प्राणावै सत्य तेषामेष सत्यम्' इति प्राणाजीवा अचिद्वतस्वरूपविकाररहिताः तद्वतस्वभावविकारस्याप्यभावात्तेभ्योऽप्येष· परमसत्यइत्यर्थः 'अनुप्रविश्य नामरूपे व्याकरवाणि' इति छान्दोग्यश्रुत्यनुसारात् 'सृष्ट्वाऽनुप्राविशत्' इत्यपूर्वकाले क्त्वाबोध्यः। स्थूलावस्थतदन्तःप्रवेशस्य प्रागसतोर्निर्देशः॥

नन्ववस्थान्तरापत्तिरुत्पत्तिः तत्राचित स्वरूपावस्थान्तरस्य चित स्वभावावस्थान्तरस्यच सत्वाद्युक्ता कार्यता । परमात्मनस्तु तदुभयरहितस्य न कार्यता युक्ता । अतएव तादृशस्योपादानता तत्सम्बन्धमात्रात्कल्प्यमाना स्यात्— नैष दोषः—यथाहि सत्येवाचिद्वस्तुनि प्रागसती पृथुबुध्नोदराद्यवस्थाऽऽविर्भवति यथावा चिद्वस्तुनि सत्येव ज्ञाने प्रागसती प्रसरणरूपाऽवस्था जायेत तथा तदुभयशरीरके परमात्मन्यपि प्रागसती स्थूलान्तर्यामिता तन्नियमनादिरूपाऽवस्था प्रादुर्भवतीति युक्ता कार्यता । तथाच महासिद्धान्ते श्रीमद्भाष्यं 'स्थूलावस्थ नामरूपविभागविभक्तस्य चिदचिद्वस्तुनआत्मतयाऽवस्थानात् कार्यत्वमुपपन्नं । अवस्थान्तरापत्तिरेवहि कार्यत्वम्' इति 'नात्माश्रुते'रित्यत्रचैतदेवाविशदमुपपादितम् 'अतस्सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकार ब्रह्म स्वस्माद्विभक्तव्यपदेशानर्हाति सूक्ष्मदशापन्नचिदचिच्छरीरं तिष्ठति तत् कारणावस्थं ब्रह्म । कदाचिद्विभक्त नामरूपस्थूलावस्थ चिदचिद्वस्तुशरीरं तत् कार्यावस्थम् । तत्र कारणावस्थस्य कार्यावस्थापत्तौ अचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिम-

त्तया स्वरूपान्यथाभावरूपविकारो भवति । चिदंशस्य कर्मविशेषफलभोक्तृत्वाय तदनुरूपज्ञानविकासरूपविकारो भवति । उभयप्रकारविशिष्टे नियन्त्रंशेच तदवस्थतदुभयविशिष्टतारूपविकारो भवति । कारणावस्थाया अवस्थान्तरापत्तिरूप विकार प्रकारद्वये प्रकारिणिच समान ' इति ॥

यत्तु एवंसति निर्विकारश्रुतेर्बाध स्यादिति कैश्चिदुक्त तत् अज्ञातविधि निषेधस्वभावैरुक्तमित्युपेक्षणीयम । एपहि विधिनिषेधशास्त्राणां प्रक्रिया । यद्य प्यभावप्रतिषेधत्ववैधुर्याय निषेध प्रापकप्रमाणसापेक्ष —तथाऽपि तद्यदि लौकि कादन्यन्नास्ति तदा तत्सर्वथैव निषेधति यथा ' नकलञ्ज भक्षये ' दित्यादौ । यदा तु लौकिकमलौकिकंचत्युभयमस्ति तदाऽपि लौकिकमेवापेक्षते । यथा ' न हिंस्या दि त्यादौ । यत्रत्वलौकिकमेव प्रापक तद्यदि सामान्यविषय विहितविशेषव्यति रिक्तविषयस्सम्पद्यते यथा नप्रथमयज्ञे प्रव्रज्यादित्ययमपिवायोऽनूचानस्याप्तस्य प्रव्रज्यादित्येतदतिरिक्तविषयइति । अङ्गीकृतश्च तैरपि जीवोत्पत्तिनिषेध' तदुत्प त्तिबोधकविध्यनुरोधेन स्वरूपोत्पत्त्यभावपर । पराधीनविषयावाप्तिरूपोत्पत्तिस्त्वभिमता परमात्मन्यपि तन्नियामकरूपात्मनोत्पत्तिरिदानीमेवोक्ता । तथाऽन्येऽप्यणुत्वमहत्वान्यत्वानन्यत्वैकत्वबहुत्वादयो विरुद्धधर्मा ब्रह्मणि शक्तिवैचित्र्यादङ्गीकृता' । निर्गुणत्वाशरीरत्वादयोऽप्येवमेवोपपादिताः ॥

एवमन्यत्राहष्ट नित्यानामपि सांशत्व स्वरूपस्याप्युपाधित्व नित्यस्यापि प्रतिबिम्बमित्यादयस्सहस्रश नैरङ्गीकृतास्सन्ति । तत्र किमपराद्धमुपादानत्वेन । अतश्चिदचिद्गतकर्माद्यधीनविकारत्व निर्विकारत्वश्रुतिर्निषेधतीत्येतादृशं जगदुपादानत्वं न सा श्रुतिर्बाधते । अन्यथा ' नासदासीन्नोसदासीत्तदानी ' ' असद्वाइद मग्रआसीत् नैवेह किञ्चनाग्रआसीत् ' इत्यादिभिर्ब्रह्म तत्सत्तयोरपि निषेध. स्यादित्यास्तां तावत् ॥

एतेन ' तदात्मानग्स्वयमकुरुत इत्यादि व्याख्यात तदेतत्सूत्रकृदाह ' आत्मकृतेरिति अत्राप्युदाहृतश्रुत्यन्तरानुसारेण जगद्रूपेण कारणमेवाकुरुतेत्य नेनावगम्यते । ' एतस्माज्जायतेप्राण.—तस्मादेतद्ब्रह्म ' इत्यादावपि तदेतच्छब्दयोर्विशिष्टपरत्वात् पञ्चम्या उपादानपरत्वात् युक्तोक्तार्थपरता ॥

यत्तु सर्वासामेतासां पञ्चमीनामवधिपञ्चमीत्वं कैश्चिदुक्त तत्प्रामादिकम् सर्वव्यापकाद्ब्रह्मण. कस्याप्यपायाभावेन तन्निमित्तकावधित्वानुपपत्तेः प्रत्याख्यान

भाष्यंतु लौकिके प्रसिद्धाश्रयणेनैव तदुच्यते। 'तन्त्राश्रयास्तु प्रक्रियाभिद्यन्त' इति वदता कैयटेनैव लौकिकोदाहरणमात्रविषयमिति दर्शितम्। उपपादितंच तेनैव 'यद्यस्माज्जायते तत्तस्मादपक्रामतीत्युच्यत' इति 'नहि परमाण्वादिसमवेत कारणेभ्योऽपृथग्देश कार्यमुपपद्यते इति वक्तुर्वैशेषिकस्यास्ति कारणात्कार्यस्या पक्रामः। नाप्याविर्भावतिरोभावलक्षणजन्मनाशरूपतारेणामाभ्युपगन्तुस्सांख्य-स्यमते। अतोऽवस्थान्तरापत्तिरूपकार्यत्वाङ्गीकर्त्रस्मन्मतेऽपि नतद्विरोधो दोष. कारणसामान्यार्थकत्ववादिनाऽपि प्रत्याख्यानभाष्याविरोध इत्थमेव समाधेय'। अन्यथा 'यतो वा इमानि भूतानि' त्यादौ व्यापकाद्विभागाभावात् पुत्रात्प्रमोद इत्यादावसंयुक्ताद्विभागासम्भवाच्च तद्विरोधदौस्थ्यात्। योगविभागेन तत्सि-द्धिमाश्रित्य प्रत्याख्यानमित्यस्य भाष्यस्वारस्यविरोधित्वात्॥

वस्तुतस्तु अत्रापायो न सर्वात्मना कारणदेशत्याग। शृङ्गाच्छिर इत्या-दावपि दर्शनात् अपितु देशान्तरसम्बन्ध। सच सूक्ष्मावस्थचिदचिद्विशिष्टा-द्ब्रह्मणः स्थूलावस्थस्यास्त्येवेति नाकिञ्चिदनुपपन्नम्॥

एतेन मृत्पिण्डाद्घटो जायत इत्यादौ जनिकर्तु प्रकृति. इत्यपादानम्। तत्र प्रकृतित्वं न विकारित्वम् 'प्राक् कैकयीतो भरतस्ततोऽभूत्' 'वायोर्जात' इत्यादौ पञ्चमीदर्शनात्। नहि सुतवपुषो मातापितृशरीरविकारत्वम्। अपितु तदीयशुक्लशोणितादिविकृतित्वमेव। शुक्लशोणितादे. शरीरस्थत्वेऽपि मलमूत्रा-देरिव शरीरावयवत्वाभावादिति कस्यचिन्नवीनतार्किकस्योक्तिरपि परास्ता। प्रकृतिशब्दस्य प्रसिद्धप्रत्याख्यानभाष्यतद्व्याख्यानकैयटादिग्रन्थस्वारस्यपर्यालोच नेन इहोपादानकारणपरतानिश्चयेन 'प्राक् कैकेयीतो भरत' इत्यादावपि प्रागु-दाहृत धर्मशास्त्रकारादिव्यवहारानुसारेण पुत्रादिवपुषो मातापितृशरीरोपादान-कत्वनिश्चयेन च तद्युक्तीनामयुक्तत्वात्। मलमूत्रादिवच्छुक्लशोणितादेश्शरीरान-वयवत्वोक्तिरपि न युक्ता। 'तत्सप्तधातु त्रिमल द्वियोनि. सप्तधातुमयो देह' 'पञ्चभूतात्मको देह:' इत्यादि प्रमाणविरोधात्। भूतपञ्चकमध्यप्रविष्टाद्विका-राहि शुक्ल शोणित च। अतस्तयोश्शरीरावयवत्व प्रमाणसिद्धम्। मलमूत्रयोस्तु 'अन्नमशित त्रेधा विधीयते तस्य यः स्थविष्ठो भागस्तत्पुरीष' 'आप. पीतास्त्रे-धा विधीयन्ते तासा य. स्थविष्ठो भागस्तन्मूत्रम्' इति छान्दोग्योक्तरीत्या भक्षि-तान्नोदकस्थूलपरिणामविशेषस्य मलमूत्रादेरनवयवत्वेऽपि तदन्यस्य देहाविना-

त्वस्य शुक्लादेस्तदवयवत्वानपायात् । नहि पृथगुपलम्भमात्रादनवयवत्वम् । केशदन्तनखादेरप्यनवयवत्वापातात् इति यत्किञ्चिदेतत् ॥

'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' इति कर्तृयोनिपदाभ्यां निमित्तत्वमुपादानत्वञ्चोच्यते । ईशपदेन तदुपयुक्तं चिदचिच्छरीरकत्वं प्रदर्श्यते । तदेतदाह 'साक्षाच्चोभयाम्नानात्' इति 'योनिश्चहि गीयते' इतिच । योनिशब्दश्च कारणे प्रसिद्धः न स्थाने. क्वचित्कस्तव्यपदेशस्तु गौणः स्यात् । नचेह तथा, मुख्ये बाधकाभावात् । 'एतद्योनीनि भूतानि सर्वाणि' इति गीताविरोधाच्च । 'यद्भूतयोनिं परिपश्यन्ति धीराः' इतिचात्रैवानुकूलम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञान मृद्घटादिदृष्टान्तश्चात्रैव स्वरसौ । साहचर्यप्राधान्याभ्यां तदुपपादनस्य गौणत्वात् मृद्घटादिदृष्टान्तस्य तदनुपपादकत्वाच्च । तदेतत्प्रतिज्ञादृष्टान्तयोरनुपरोधं वदताऽन्यत्रोपरोधं दर्शयता सूचितम् । विस्तृतं च सर्वमेतत्सिद्धान्तचिन्तामणौ ॥

नन्वेवं विशिष्टोपादानत्वरूपे कारणत्वे विशेषणविशेष्योभयगततत्तदवस्थान्तरापत्तिप्रयुक्ते सिद्धान्ते सिद्धे 'यत्केनचिद्भ्रान्तेन प्रलपितं—शास्त्रयोनित्वात्' इत्यत्र कारणत्वस्य वेदान्तैकगम्यतां प्रसाध्य 'नात्मा श्रुतेः' इत्यत्र ब्रह्मणो निर्विकारत्वोपपादकश्रुत्युदाहरणेन तत्कारणत्वं निराकृतमिति, तत्तुच्छम् । तत्र स्वरूपान्यथात्वज्ञानसङ्कोचविकासरूपविकारद्वयाभावप्रतिपादनमुखेननियन्त्रंशे तदुभयविशिष्टतारूपविकारो भवतीत्येवाभिधानात् । कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणिच समान इति तस्यैव कण्ठतोऽभिधानाच्च । एवमसन्दिग्धेऽप्यवस्थान्तरापत्त्या कारणत्वोपपादने अत्र ब्रह्मणः कारणत्वं प्रतिषिद्धमित्यविवादम् । स्वरूपधर्मान्यथात्वलक्षणविकारद्वयशून्यस्य कारणत्वायोगादित्युक्तिरुन्मादविलसितेति स्पष्टमेव सर्वेषाम् । तेन प्रणवाविस्वरन्यायः प्रदर्शितः । नन्वेवमविरुद्धे भाष्यद्वये विरोधोक्तिर्मन्दमनीषस्यानुपादेया ॥

अथ स्यात्—माऽस्तु भाष्यद्वयविरोधः युक्तिविरोधस्तु भवतीतिचेत्, केयं युक्तिः ? निर्विकारत्वं चेत उक्तोत्तरत्वात् । नित्यस्य कार्यत्वासम्भव इतिचेत् नित्यस्य जीवस्य देवमनुष्यादिशरीरद्वारेव स्वशरीरभूतचिदचिद्द्वारा कार्यत्वस्य परमात्मनोऽप्यविरोधात् । स्थूलावस्था चिदचिद्द्वारिकाहि परमात्मनस्तदन्तर्यामित्वावस्था । साच प्रागसती जायत इति कार्यतारूपतामापन्ना । नचैषा नित्यत्वविरोधिनी ॥

किञ्च ' तदेतदक्षय नित्यं जगन्मुनिवराखिलम्। आविर्भावतिरोभावजन्म नाशविकल्पवत्॥ इति महर्षयोऽस्मार्षुः। मध्यस्थाश्चाहु । ' द्रव्य हि नित्यमाकृतिरनित्या ' इति ' मही घटत्वं घटत कपालिका कापालिका चूर्णरजस्ततोऽणुः ' । इतिचात्रैवानुकूलम। तदेवं द्रव्यमात्रस्य स्वरूपेण नित्यत्वे अवस्थान्तरापत्त्यात्वनित्यत्वे सर्वसम्मते नित्यत्व कार्यत्वविरोधीति रिक्त वच. । तदेवं वस्तुमात्रस्य नित्यत्वे सत्कार्यवादिवेदान्तिसम्मते अवस्थान्तरापत्तिरूपकार्यत्वे चावधृते स्वरूपान्यथात्व ज्ञानान्यथात्वयो चिदचिद्गतयोरवस्थान्तरयो ' सत्य ज्ञानमनन्त ब्रह्म ' इति ब्रह्मलक्षणान्तर्गतसत्यज्ञानपदाभ्यां नामान्तरभजनार्हावस्थान्तररूपासत्यत्वज्ञानसङ्कोचवारकाभ्यां निर्विकारत्वसर्वज्ञत्वश्रुतिसहिताभ्यां ब्रह्मणि निवारणा च्चिदचिदन्तर्यामितायास्सार्वदिक्या अपि स्थूलसूक्ष्मावस्थतदुभयनिरूपितत्वविशिष्टवेषेणासार्वदिक्या युक्तैवोत्पत्तिविनाशरूपतेति न कार्यत्व कारणत्वदौर्भिक्ष्यम्। अतएव न स्वभावान्यथात्वमात्रनिषेधशङ्काऽपि युक्ता । एकत्वबहुत्त्वाणुत्वमहत्वान्तर्यामित्वप्रभृतिबह्ववस्थाप्रतिपादकसकलागमान्तसन्ततिविरोधात् । अतस्सर्वानुगतमवस्थान्तरापत्तिरूप कार्यत्वं ब्रह्मण्यपि दुर्वारम्। एतदेव विकार इत्युच्यते। तत्र स्वरूपविकारो निर्विकारत्ववादिश्रुतिस्मृतिविषयइति स एवानर्थः, असत्ताहेतुत्वात्। अतएव तद्राहित्यमेव सत्यत्वमित्युच्यते । ' अपक्षयविनाशाभ्यां परिणामर्धिजन्मभि. । वर्जितश्शक्यते वक्तु यस्सदाऽस्तीति केवलम ॥ ' इति भावविकाराइतिह्येते प्रसिद्धा आचिद्गता । ' विकारजननीमज्ञाम् ' इतिश्रुते· अवस्थान्तरापत्तिमात्र तु नार्थ. । अतोऽन्यथात्वस्य विकारत्वोक्त्या कारणत्वस्य श्रुतिविधेयत्व निरस्त भवति । नहि विकार श्रुत्या विधेयो भवति। तस्यानर्थत्वात्, अनर्थविधाने शास्त्रस्याप्रामाण्यापातादिति दूषण द्वितीयमुन्मादविलसितम् । विकारमात्रस्यानर्थरूपत्वाभावात्। स्वरूपधर्मान्यथाभावशब्दितस्य परिणामस्य जन्मरूपत्वाभावात्। तस्य च न जायते म्रियते इत्यादिना निषिद्धत्वात्। कारणत्वप्रतिपादकवाक्यानां बाध आवश्यक इति प्रलपन तृतीयमुन्मादविलसितम्। परिणामवृद्धयोर्जन्मन्यन्तर्भावेऽपि तस्य विकाररूपतया निषिद्धत्वेऽपि निरुक्तस्वभावान्यथाभावरूपजन्मनः श्रुतिप्रमितस्योक्तरीत्या निषेधासंस्पर्शितया बाधायोगात्। ' न जायते म्रियते ' इत्यादिना कारणत्वनिषेधइतिच चतुर्थमुन्मादविलसितम। त्वन्मते तस्य ब्रह्मविषयत्वेऽपि अस्मन्मते जीवविषयत्वात् ॥

विकारसद्भाववैलक्षण्ययोरुपपादनात् । तत्र विरोधकथनं दशममुन्मादविलसितम् । अत एव अत्र श्रुतिबलान्निर्विकारस्यैव कारणत्वं सिद्धान्तितमित्याशङ्क्य इत्थंवदना निर्विकारस्यैव स्वरूपधर्मान्यथात्वे स्वीकृते स्यातां अतथाविधस्य कारणत्वायोगात् । एवं च 'नात्मा श्रुते' इत्यत्र स्वरूपधर्मान्यथात्वस्य प्रतिषेध्यत्वोक्त्या विरोध । नचान्यथात्वमन्तरेण श्रुतिबलात्कारणत्वं वक्तुं शक्यम् तथात्वे तत्रैव चिदचितो परिणामोपपादनमसङ्गतं स्यादिति दूषणं तदप्येकादशमुन्मादविलसितम् । सविकारस्य सविकारेणैव कारणेन भवितव्यम् इत्यनुवादस्य श्रुतिबलान्निर्विकारमेव कारणमिति राद्धान्तितमित्यस्य 'नात्मा श्रुतेः' इत्यत्र मृत्स्वरूपधर्मान्यथात्वयो श्रुतिप्रतिषेध्यत्वोक्तिरित्यस्य च प्रत्येकमुन्मादविलसितत्वात् । अन्यथात्वाश्रयस्यैव कारणत्वनियमादित्यपरमुन्मादविलसितम् । कालादृष्टादेः दण्डादेश्च विनाऽप्यन्यथात्वं कारणत्वदर्शनात् । नहि प्रागभावादेः कार्यसामान्यकारणस्यान्यथात्वं स्वरूपगतं स्वभावगतंवा केनाप्यनुन्मत्तेनोपलभ्यते । एवमुन्मादचतुष्टयगर्भोऽयं स्वरूपधर्मान्यथात्वप्रतिषेधोक्तिरूपो महानुन्मादः ॥

यदपि ब्रह्मैव कारणमिति निर्धार्य जगतः कारणान्तरस्वीकारादपरो विरोध एवमनुमानगम्यं कारणमिति मतं निरस्य पुनरानुमानिककारणाङ्गीकारादपरो विरोध नच तदपि श्रुतिगम्यं कार्यसजातीयकारणस्यानुमानिकस्य श्रुतिगम्यत्वायोगात् । अत एव भगवत्पादैः श्रुतिप्रमाणादेव कारणसिद्धिरङ्गीकृता कारणान्तरस्वीकारे ब्रह्मलक्षणस्यातिव्याप्तिरिति अनर्थान्तरं चेति दूषणप्रलपनम् तदुपहास्यम्—विशिष्टस्यैकस्यैव कारणत्वनिर्धारणेन स्वतन्त्रकारणान्तरव्यवच्छेदेऽपि विशेषणगतकारणत्वाविरोधेन तदुक्तेरुन्मादविलसितत्वात् । नहि देवदत्त एवात्र कार्ये कारणमित्युक्तिस्तच्छरीरस्यापि कारणत्वाद्विरुद्धेति कश्चिदनुन्मत्तो ब्रवीति । ब्रह्मपदस्य विशिष्टपरतोपपादितैव । एवं केवलप्रधानोपादानत्वस्य केवलेश्वरनिमित्तत्वस्यानुमानगम्यत्वात्तन्निरासेन ब्रह्मात्मकप्रधानपुरुषोभयशरीरकस्य परस्य निमित्ताभिन्नोपादानत्वे श्रुत्येकगम्येऽङ्गीकृते पुनरानुमानिककारणाङ्गीकारोक्तिरुन्मादविलसितैव । अनुमानमात्रस्योपादानत्वासमानाधिकरण कर्तृताव्याप्तिमूलकस्य तत्समानाधिकरण जगत्कर्तृतैकगोचर श्रुतिभिन्नाविषयत्वात् । तत्र स्वगुरुशिक्षितपक्षसाक्षीकरणमप्यन्धस्य जात्यन्धसहायवदुन्माद

विलसितमेव । अत एव कारणान्तराङ्गीकारे ब्रह्मलक्षणातिव्याप्तिकथनमप्युन्मादविलसितम् । ब्रह्मगतोपादानतावच्छेदकतया स्वतन्त्रकारणत्वाभावेनाभिन्ननिमित्तोपादानताविरहेणातिव्याप्तेरनवकाशात् । चिदचिदात्मक कृत्स्न जगत्कारणत्वस्यैव ब्रह्मलक्षणतया अन्यतरस्यान्यतरस्यापि अकारणतयाऽतिव्याप्तिशङ्कानुत्थानाच्च ॥

एतेन स्वरूपधर्मान्यथात्वलक्षणविकारस्य श्रुतिप्रतिषेध्यत्वात्तादृशविकाराश्रय चिदचिद्वैशिष्ट्यमात्रेण ब्रह्मणः कारणत्वाभ्युपगमात्तस्य च श्रुतिभिरप्रतिषेधान्न विरोध इति शङ्काप्युन्मादविलसितैव । स्थूलावस्थ चिदचिदन्तरावस्थानरूपावस्थान्तरापत्तेः प्रागसत्यास्तद्गतोत्पत्तिरूपतया कार्यत्वोपपादनात् । यद्यप्यत्र विकल्प्य दूषणं किं विकारत्वेनाभिमतं नवा ? आद्ये विकारिसंसर्गे विकारस्यापि पातकिसंसर्गकृतपातकस्येव प्रतिषेधविषयत्वात् । द्वितीये त्वदुक्तिविरोध । उभयप्रकारविशिष्टे नियन्तरि तदवस्थ तदुभयविशिष्टतारूप विकारो भवतीति हि त्वदुक्तिः तदप्युन्मादविलसितमेव । तस्य विकाररूपत्वे श्रुतिप्रमितत्वेन तन्निषेध्यत्वायोगस्योक्तत्वात् । विकारिससर्गकृतो विकार इतिचोन्माद विलसितमेव ॥

तथाहि—किं विकारिसंसर्गएव विकारोऽभिमतस्त्वया ? किंवा पातकिसंयोगात्पुरुषान्तरेऽपि पातकमिव परमात्मन्यपि तादृशो विकारो जायते ? नाद्यः संसर्गमात्रस्य त्वदुदाहृत भावविकारेष्वनन्तर्भावात । विकारि मृदादिससर्गिणि पुरुषे मृदादेरिव विकारित्वव्यवहारस्य लोकेऽप्यभावाच्च । तस्माच्छास्त्रदृष्टविरोधात्ससर्गमात्रस्य निषेध्यविकारोक्तिरयुक्ता । नाद्वितीय पातकिसंसर्गस्येव विकारिसंसर्गस्य निषेध्यतायां दोषहेत्वभावात् । विकारिससर्गाद्विकारिगतविकारस्यान्यस्मिन् सक्रमस्य लोकेऽप्यदर्शनाच्च । 'तत्संयोगीच पञ्चमः' इतिवद्विकारिससर्गो विकारजनकतया न श्रूयते, नापि स्मर्यते नवा दृश्यते । कथं तर्हि तदुभयवैशिष्ट्यं विकारतया भाष्य उच्यते—अवस्थान्तरमत्र विकारः नत्वसौ निषेध्यः प्रमितत्वादित्युक्तम् । सच स्वरूपान्यथात्ववर्जिचिदचिदुभयान्तर्यामितारूपः । प्रागसन्नविभक्तनामरूप तदुभयान्तरावस्थानरूप कारणावस्थाया अन्यत्वा दुत्तरभावित्वाच्च कार्यत्वरूपः सम्पद्यत इति उदाहृत बहुश्रुतिप्रतिपन्नोसौ न केनापि निषेध्य इति तस्य निषेध्यत्वोक्ति रुन्मादविलसितैव ॥

कारणावस्थाया अवस्थान्तरापत्तिर्विकार. प्रकारद्वये प्रकारिणि च समान इत्युत्तरभाष्ये तथैव प्रतिपादनात्। अतएव तदुत्तरभाष्ये एकस्यैवावस्थान्तराप त्तिरूपविकारापेक्षया 'येनाश्रुतं श्रुतम्' इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृदादिदृष्टान्तो 'यथासौम्य' इत्यादिना निदर्शित इति तथाविधविकारस्य श्रुति तात्पर्यविषयता प्रतिपाद्यते। अतो न तस्य श्रुतिनिषेध्यता ॥

यत्तु जगत्सत्यस्य विकारभ्रमाभिप्रायकत्वमाशङ्कित तन् ब्रह्माज्ञान वादिनः स्वाज्ञानविजृम्भितमुन्मादविलसितमेव ॥

यदपि जपाकुसुमलौहित्यस्य स्फटिके प्रतिभासवत् चिदचिद्गतविकारस्य ब्रह्मणि प्रतिभासमाशङ्क्य तत्रैकविज्ञानेन सर्वविज्ञानादेर्मृद्घटादिदृष्टान्तस्य-चानुपपत्तिवर्णन तदप्युन्मादविलसितमेव। अनुक्तानभिमतोत्प्रेक्षणेन दूषणात् एवं विकारस्य सत्यत्वमेष्टव्यम्। ततश्च श्रुतिप्रतिषेध्यत्वसिद्धिरित्यप्युन्मादवि लसितमेव। श्रुतिप्रतिपन्नस्य अतएव सत्यस्य श्रुत्यानिषेधायोगात् ॥

यदपि विकारिगतविकारस्य स्फटिकलौहित्यसमतामाशङ्क्य तर्हि श्रुतिप्रतिषेध्यतया मिथ्यात्वादिष्टसिध्यभिधानम् तदप्युन्मादविलसितम्। प्राक् सत्यत्वं प्रसाध्य श्रुतिप्रतिषेध्यत्वस्येद मिथ्यात्वं प्रसाध्य तथात्वस्योपपदनात् ॥

ननु प्राक्तनमताभिप्रायेणोक्तम् इदं तु सन्मतरीत्येति नदोष इति चेत्—किमस्मन्मते श्रुतिप्रमितस्य सत्यस्य श्रुत्या निषेध्यत्व क्वचिदिष्टं दृष्टंत्वया, तद-भावेऽपि तत्प्रलपनमुन्मादविलसितमेव। स्फटिकलौहित्यमपि न मिथ्या, जपा निष्ठस्यैव तस्य दोपवशात्तत्र प्रातिभासात्। प्रातिभासिकवस्तूत्पत्तिस्तु विस्तरेण निरस्ता प्राचीनैः। कारणत्वस्य मिथ्यात्वे तदुपहितस्यापि तत्त्वात्तज्ज्ञानजन्य-मोक्षोऽपि प्रातिभासिकवस्तुज्ञानजन्यहर्षादिवदनित्यः स्यादित्यन्यत्र विस्तरः ॥

यदपि दूषणं चिदचिद्वैशिष्ट्याद्ब्रह्मण. कारणत्वमिच्छन् चिदचितो जग-त्कारणत्वमिच्छसि नवा? आद्ये ब्रह्मणः कारणत्वकल्पनं व्यर्थम्। स्वरूपधर्मा-न्यथाभाववद्भ्यां चिदचिद्भ्यामेव सर्वनिर्वाहे मृन्निर्वाह्ये घटे मृद्विशिष्टाकार-स्येव चिदचिद्विशिष्टस्य ब्रह्मणः कारणत्वकल्पनानौचित्यात्। द्वितीये स्वरूपे-णान्यथाभाववतो मृदादेर्घटादिकारणत्वं प्रत्याख्यातं स्यात्। किं च विशेषणविशे ष्यभावे कामचारेण ब्रह्मविशिष्टयोश्चिदचितोः कारणत्व किं न स्यात्? किंच वैशिष्ट्यात् कारणत्वमिति कोऽर्थः? ब्रह्मांशयोश्चिदचितो यत् कारणत्वं तत्

अंशिनो ब्रह्मण एव किं वा अग्नीषोमयोर्देवतात्वमिव चिदचितोर्ब्रह्मणि च कारणत्वं व्यासज्य वर्तत इति ? अथवा चिदचिद्द्वारा ब्रह्मणः कारणत्वमिति ? उत चिदचिद्गतं कारणत्वं ब्रह्मण्युपचर्यत इति किंवा दुर्जनसंसर्गात्सज्जने दौर्जन्यमिव चिदचित्संसर्गादात्मनि कारणत्वं वास्तवं जायत इति ? किंवा मेघगतं धावनं चन्द्र इव चिदचिद्गतं कारणत्वं ब्रह्मण्यारोप्यत इति, यद्वा जपापुष्पसन्निधानात् स्फटिके लौहित्यमिव विकारिचिदचित्सन्निधानात् कल्पितं कारणत्वं ब्रह्मणि जायत इति ।

नाद्यः ब्रह्मणः सविकारत्वप्रसङ्गात् । कारणत्वमिवचिदचिद्गतजडत्वविनाशित्व दुःखित्व परतन्त्रत्वादयः सर्वेऽपि ब्रह्मणि प्रादुष्युः । चिदचितोः ब्रह्मणश्च त्वदुक्तस्वरूपविवेचनमप्यनर्थकं स्यात् । प्रकारप्रकारिणोरभेदश्च स्यात् ततश्च सकलवेदान्तव्याकोपः । अतएव न द्वितीयः, स्वरूपधर्मान्यथाभावयोः ब्रह्मण्यपि संक्रमप्रसङ्गेन जडत्वादिप्रसङ्गतौल्यात् । न तृतीयः, कारणत्वस्येव धर्मान्तराणामपि प्रसङ्गात् । चिदचिद्वस्तुद्वारा संसारित्वप्रसङ्गाच्च । नहि चिदचिद्द्वारकं परिणामित्वमात्रमेव नान्यद्भवतीत्यत्र किञ्चिन्नियामकमस्ति । किंचान्यद्वाराऽन्यस्यान्यधर्मसम्बन्धे मूर्खस्य पितुः पुत्रद्वारा पाण्डित्यं स्यात् । भर्तुर्भार्याद्वारा स्त्रीत्वं, भार्याया भर्तृद्वारा पुंस्त्वच स्यात् । यथाहुर्वाचस्पतिमिश्राः–' तथाऽपि किमायातं, विषयात्मनोः स्वभावजडयोरेतदायात । यत्तयोः संविदजडेति तत् किं पुत्रः पण्डितइति पितावा पण्डितोस्त्विति न चतुर्थः, यजमानप्रस्तराद्यभेदवत् श्रुतिविधेयत्वासम्भवात् । नापिपञ्चमः, कारणद्वयप्रसङ्गात् । विकारिसंसर्गात् ब्रह्मणो विकारित्वप्रसङ्गश्च । चिदचितोरेवान्यथात्वं नब्रह्मणः श्रुतिविरोधादिति त्वदीयाभ्युपगमविरोधश्च । नापिषष्ठसप्तमौ, मन्मतप्रवेशापत्तेः । अतो धर्मारोप धर्मान्तरोत्पत्तिवाऽन्तरेण चिदचिद्वैशिष्ट्यमात्रात् कारणत्वानिर्वाहात् आद्ये तन्मतप्रवेशात्, द्वितीये श्रुतिप्रतिषेध्यत्वाद्विरोधोदुरुद्धर इति ॥

तदिदमनादेयम् । विशिष्टस्य यत्रान्यान्वयः विशिष्टे वाऽन्यान्वयः तत्र सर्वत्र विशेषणविशेष्योभयसम्बन्धस्तावत् क्लृप्तः । तान्त्रिकैरपि विशिष्टस्य विधेयत्वे विशेषणविशेष्ययोर्द्वयोरपि विधेयत्वं एकयत्नान्वयाच्च न वाक्यभेदः । विशिष्टस्योद्देश्यत्वे विशेष्यविशेषणयोर्द्वयोरुद्देश्यत्वं तत्र प्रत्येकं विधेयत्वान्वयात्

एकयत्रान्वयासम्भवात्, वाक्यभेद इत्युक्तः। लौकिका अपि हि 'चित्रवासस्मानय' इत्यादौ विशिष्टान्वयिन्यायनयेन विशेषणस्याप्यन्वयमिच्छन्ति। वैदिकाश्च 'लोहितोष्णीषा ऋत्विज प्रचरन्ति' इत्यत्र विशेषणविशेष्ययोः प्रचरणान्वयमिच्छन्ति। आह च पतञ्जलिः 'तद्गुणा आनीयन्ते तद्गुणाश्च प्रचरन्ति' इति। संयोगसमवायौ यत्र संसर्गौ तत्राय नियमः। तेन 'चित्रगुमानय' इत्यादावानयने चित्रगवीनाम् अनन्वयेऽपि न दोष इत्याह कैयटः। अपृथक्सिद्धविशेषणेषु विशिष्टे यत्र धर्मान्वयः, तत्र यथायोग साक्षाद्वा विशेषणद्वारा च धर्मान्वय सर्वेष्टः दृष्टश्च देवदत्तोजातः, मृतः, गच्छति, तिष्ठति जानाति, इत्यादौ। तत्रहि जन्मविनाशौ शरीरद्वारकौ गमनस्थाने च। ज्ञानन्तु साक्षात्। देवदत्तो यजत इत्यत्र यजनस्य कायिक, वाचिक, मानसिकव्यापारसमवहित मानसिकज्ञानविशेषरूपस्य यथायोगमन्वयो दृष्टः। तद्यथा 'व्यह नाश्नाति' इत्यत्र व्यहरनशनरूपाङ्गस्य कायिकस्य शरीरद्वारा मन्त्रोच्चारणादेः वाचिकस्य वागिन्द्रियद्वारा, मानसिकस्य ध्यानादेः मनोद्वारा वीक्षणादेश्चाक्षुषस्य चक्षुर्द्वारा प्रधानस्य ज्ञानविशेषरूपस्य साक्षादेवेति सर्वसम्मतम्॥

किंच यथा ग्राहकग्रहणेन सान्निध्याम्नातेषु वस्तुषु परमापूर्वशेषतयाऽवगतेषु यागद्रव्यादेः अद्वारकं शेषत्वं प्रोक्षणादेः सद्वारकं शेषत्व च मुख्यमेव। तथा 'बहुस्याम्' इति ग्राहकग्रहणेन सर्वास्ववस्थासु परमात्मीयतयाऽवगतासु स्वरूपान्यथाभाव ज्ञानसङ्कोचादिरूप सद्वारकावस्थाया तत्तन्नियमनरूपाऽद्वारकावस्थायाश्च परमात्मीयत्व मुख्यमेव। अतो विशिष्टोपादानत्व विशेषणविशेष्योभयान्वितत्वे सन्देहाभावात् तत्र विकल्पकल्पनमुन्मादविलसितमेव॥

तत्र यद्दूषण विशेषणयोः चिदचितोः कारणत्वेसति ततएवोपपत्तौ ब्रह्मणः कारणत्वकल्पन व्यर्थम्। मृत्कार्ये तद्विशिष्टस्याकाशस्येवेति, तदप्युन्मादविलसितम्। नहि व्यसनितया कारणत्व कल्पयामः, किन्तु श्रुतत्वात् विशिष्टस्य कारणत्वमङ्गीकुर्मः श्रुतत्यागानौचित्यात्। तत्रैतावदेव वक्तव्यम्, सत्यं ब्रह्मणः कारणत्वं श्रुतं, तत् विशिष्टनिष्ठमिति कुतइति? तत्र शब्दसामर्थ्यमर्थसामर्थ्यं बहुश्रुत्यनुग्रहः समस्तशास्त्रीय व्यवहारताचेत्युक्तम्। तथाहि—अकृतिव्यतिरिक्तां जाति गवादिपदप्रवृत्तिनिमित्तमभ्युपगच्छन्तो वैशेषिकादयः, तत्राश्रयताघटकतयाऽकृतिसंसर्गयोरपि वाच्यतामातिष्ठन्ते। वैयाकरणास्तु जातिव्यक्ति

लिङ्गसंख्याकारकाणीति पञ्चक प्रातिपदिकार्थमाचक्षते। त्रिकमपरे तत्रैकमेव प्रधानमितरद्विशेषणमिति निर्विवादम्। आकृत्यतिरिक्तां जातिमनभ्युपगच्छन्तश्च तद्विशिष्टां व्यक्तिं तत्तत्पदवाच्यां वदन्ति। सर्वेऽप्येते जातिशब्दान् गुणशब्दान् क्रियाशब्दांश्च विशिष्टवाचिन. प्रतिजानते। एव सदात्मब्रह्मादिशब्दाअपि चिदचिद्विशिष्टवाचिन एव। चिदचितोरपि जात्याकृत्योरिव व्यक्ते ब्रह्मणो विशेषणतैकस्वभावत्वादचेतन सर्वं कस्यचिच्चेतनस्याधीनम्। चेतनश्च परतन्त्रः सर्वस्वतन्त्रचेतनान्तराधीनो दृष्टः। परमात्माच स्वतन्त्र.। अत. परतन्त्रामितरत् द्वयम्। तत्परतन्त्रतया तद्विशेषणैकस्वभावम्। तदेवं सत्ताव्याप्ति बृहत्व बृंहणत्वनिमित्तका अपि शब्दाः तत्तद्विशेषणविशिष्टपरा। शब्दस्वाभाव्यादर्थस्वाभाव्याच्च ॥

यद्यपि तावदात्मादयः शब्दाः केवलपरा एव स्यु. तथाऽपि 'यजेत स्वर्गकाम इति केवलस्य यागस्य कारणत्वश्रवणेऽपि केवलस्य तस्य कालान्तरभाविस्वर्गादिजननासामर्थ्यं प्रत्यक्षेणावगम्यापूर्वादिद्वारक तदुपपाद्यते, यथावा, देहान्तरानुभाव्यस्वर्गादिसाधन यागादौ केवलस्यैवात्मनः स्थिरस्य कर्तृत्वश्रवणेऽपि अशरीरस्य कर्मणि कर्तृत्वायोगा देहवतः कर्तृत्वे आधानादिसाध्याग्निसाध्यत्वाद्योग्यतापर्यालोचनेन वेदाध्ययनाग्न्याधानादि योग्यब्राह्मणादि शरीर विशिष्टस्यैव सामर्थ्यानुसारात्कर्मकर्तृत्वं, यथावा 'हस्तेनावद्यति, स्रुवेणावद्यति, स्वधितिनाऽवद्यति' इत्यादाववदानसामान्यंप्रति हस्तादे, करणत्वश्रवणेऽपि हस्तादेस्सामर्थ्यमालोच्य पुरोडाशाद्यवदानमात्र.ङ्गत्वं व्यवस्थाप्यते। एवं निर्विकारकेवलस्यात्मन परिणामे श्रुतेऽपि वस्तुसामर्थ्यमनुसृत्य 'पृषदाज्यनयादात्मा सुखमास्त' इत्यादौ आत्मादिशब्दवज्जगत्कारणवादि ब्रह्मादिशब्दा वस्तुसामर्थ्यसनाथाश्चिदचिद्विशिष्टपरा इति वक्तव्यम्। एव सत्येव प्रतिज्ञादृष्टान्तादि बहुश्रुत्यनुग्रहः ॥

किंच शरीरवाचकानां ब्राह्मणादिपदानां शरीरिपर्यन्तत्व शरीरिवाचकानामात्मादिपदानां शरीरविशिष्टवाचित्वं च दृष्टम्। सर्वं च परमात्मनश्शरीरमित्यन्तर्यामिब्राह्मणाद्यवगतम्। अतस्तद्विशिष्टवाचित्वमपरिहार्यम्। अतः 'सदेव सौम्येदमग्रआसीत्' 'तदैक्षत' 'आत्मावा इदमेकएवासीत्' 'स ईक्षत' 'सोऽकामयत बहुस्याम्' इत्यादिषु श्रुतं ब्रह्मणो जगत्कारणत्वमुदाहृ

एकयत्नान्वयासम्भवात्, वाक्यभेद इत्युक्तः। लौकिका अपि हि 'चित्रवाससमानय' इत्यादौ विशिष्टान्वयिन्यायनयेन विशेषणस्याप्यन्वयामिच्छान्ति। वैदिकाश्च 'लोहितोष्णीषा ऋत्विज प्रचरन्ति' इत्यत्र विशेषणविशेष्ययोः प्रचरणान्वयमिच्छन्ति। आह च पतञ्जलिः 'तद्गुणा आनीयन्ते तद्गुणाश्च प्रचरान्ति' इति। सयोगसमवायौ यत्र ससर्गौ तत्राय नियमः। तेन 'चित्रगुमानय' इत्यादावानयने चित्रगवीनाम् अनन्वयेऽपि न दोष इत्याह कैयटः। अपृथक्सिद्धविशेषणेषु विशिष्टे यत्र धर्मान्वयः, तत्र यथायोग साक्षाद्वा विशेपणद्वारा च धर्मान्वयः सर्वेष्टः दृष्टश्च देवदत्तोजातः, मृतः, गच्छति, तिष्ठति जानाति, इत्यादौ। तत्रहि जन्मविनाशौ शरीरद्वारकौ गमनस्थाने च। ज्ञानन्तु साक्षात्। देवदत्तो यजत इत्यत्र यजनस्य कायिक, वाचिक, मानसिकव्यापारसमवहित मानसिकज्ञानविशेषरूपस्य यथायोगमन्वयो दृष्टः। तद्यथा 'व्यह नाश्नाति' इत्यत्र व्यहरनशनरूपाङ्गस्य कायिकस्य शरीरद्वारा मन्त्रोच्चारणाद. वाचिकस्य वागिन्द्रियद्वारा, मानसिकस्य ध्यानादेः मनोद्वारा वीक्षणादेश्चाक्षुषस्य चक्षुर्द्वारा प्रधानस्य ज्ञानविशेषरूपस्य साक्षादेवेति सर्वसम्मतम्॥

किंच यथा ग्राहकग्रहणेन सन्निध्याम्नातेषु वस्तुषु परमापूर्वशेषतयाऽवगतेषु यागद्रव्यादेः अद्वारकं शेषत्वं प्रोक्षणादे, सद्वारकं शेषत्व च मुख्यमेव। तथा 'वहुस्याम्' इति ग्राहकग्रहणेन सर्वास्ववस्थासु परमात्मीयतयाऽवगतासु स्वरूपान्यथाभाव ज्ञानसङ्कोचादिरूप सद्वारकावस्थाया तत्तन्नियमनरूपाऽद्वारकावस्थायाश्च परमात्मीयत्वं मुख्यमेव। अतो विशिष्टोपादानत्व विशेषणविशेष्योभयान्वितत्वे सन्देहाभावात् तत्र विकल्पकल्पनमुन्मादविलसितमेव॥

तत्र यद्दूषण विषेषणयोः चिदचितोः कारणत्वेसति ततएवोपपत्तौ ब्रह्मणः कारणत्वकल्पन व्यर्थम्। मृत्कार्ये जद्विशिष्टस्याकाशस्येवेति, तदप्युन्मादविलसितम्। नहि व्यसानितया कारणत्वं कल्पयामः, किन्तु श्रुतत्वात् विशिष्टस्य कारणत्वमङ्गीकुर्मः श्रुतत्यागानौचित्यात्। तत्रैतावदेव वक्तव्यम्, सत्यं ब्रह्मणः कारणत्वं श्रुतं, तत् विशिष्टनिष्ठमिति कुतइति? तत्र शब्दसामर्थ्यमर्थसामर्थ्यं बहुश्रुत्यनुग्रहः समस्तशास्त्रीय व्यवहारताचेत्युक्तम्। तथाहि—अकृतिव्यतिरिक्तां जाति गवादिपदप्रवृत्तिनिमित्तमभ्युपगच्छन्तो वैशेषिकादयः, तत्राश्रयताघटकतयाऽकृतिसंसर्गयोरपि वाच्यतामातिष्ठन्ते। वैयाकरणास्तु जातिव्यक्ति

लिङ्गसंख्याकारकाणीति पञ्चकं प्रातिपदिकार्थमाचक्षते। त्रिकमपरे तत्रैकमेव प्रधानमितरद्विशेषणमिति निर्विवादम्। आकृत्यतिरिक्तां जातिमनभ्युपगच्छन्तश्च तद्विशिष्टां व्यक्तिं तत्तत्पदवाच्यां वदन्ति। सर्वेऽप्येते जातिशब्दान् गुणशब्दान् क्रियाशब्दांश्च विशिष्टवाचिनः प्रतिजानते। एवं सदात्मब्रह्मादिशब्दाअपि चिदचिद्विशिष्टवाचिन एव। चिदचितोरपि जात्याकृत्योरिव व्यक्ते ब्रह्मणो विशेषणैकस्वभावत्वादचेतन सर्वं कस्यचिच्चेतनस्याधीनम्। चेतनश्च परतन्त्रः सर्वस्वतन्त्रचेतनान्तराधीनो दृष्टः। परमात्माच स्वतन्त्र.। अतः परतन्त्रमितरत् द्वयम्। तत्परतन्त्रतया तद्विशेषणैकस्वभावम्। तदेवं सत्ताव्याप्ति बृहत्व बृंहणत्वनिमित्तका अपि शब्दाः तत्तद्विशेषणविशिष्टपरा॰। शब्दस्वाभाव्यादर्थस्वाभाव्याच्च॥

यद्यपि तावदात्मादयः शब्दाः केवलपरा एव स्युः तथाऽपि 'यजेत स्वर्गकाम' इति केवलस्य यागस्य कारणत्वश्रवणेऽपि केवलस्य तस्य कालान्तरभाविस्वर्गादिजननासामर्थ्यं प्रत्यक्षेणावगम्यापूर्वादिद्वारक तदुपपाद्यते, यथावा, देहान्तरानुभाव्यस्वर्गादिसाधन यागादौ केवलस्यैवात्मनः स्थिरस्य कर्तृत्वश्रवणेऽपि अशरीरस्य कर्मणि कर्तृत्वायोगा देहवतः कर्तृत्वे आधानादिसाध्याग्निसाध्यत्वाद्योग्यतापर्यालोचनेन वेदाध्ययनाग्नयाधानादि योग्यब्राह्मणादि शरीर विशिष्टस्यैव सामर्थ्यानुसारात्कर्मकर्तृत्वं, यथावा 'हस्तेनावद्यति, स्रुवेणावद्यति, स्वधितिनाऽवद्यति' इत्यादाववदानसामान्यंप्रति हस्तादः करणत्वश्रवणेऽपि हस्तादेस्सामर्थ्यमालोच्य पुरोडाशाद्यवदानमात्राङ्गत्वं व्यवस्थाप्यते। एवं निर्विकारकेवलस्यात्मनः परिणामे श्रुतेऽपि वस्तुसामर्थ्यमनुसृत्य 'पृषदाज्यनयादात्मा सुखमास्त' इत्यादौ आत्मादिशब्दवज्जगत्कारणवादि ब्रह्मादिशब्दा वस्तुसामर्थ्यसनाथाश्चिदचिद्विशिष्टपरा इति वक्तव्यम्। एव सत्येव प्रतिज्ञादृष्टान्तादि बहुश्रुत्यनुग्रहः॥

किंच शरीरवाचकानां ब्राह्मणादिपदानां शरीरिपर्यन्तत्व शरीरिवाचकानामात्मादिपदानां शरीरविशिष्टवाचित्वं च दृष्टम्। सर्वं च परमात्मनश्शरीरमित्यन्तर्यामिब्राह्मणाद्यवगतम्। अतस्तद्विशिष्टवाचित्वमपरिहार्यम्। अतः 'सदेव सौम्येदमग्रआसीत्' 'तदैक्षत' 'आत्मावा इदमेकएवासीत्' 'स ईक्षत' 'सोऽकामयत बहुस्याम्' इत्यादिषु श्रुतं ब्रह्मणो जगत्कारणत्वमुदाहृ

तोपपादकबलाद्विशिष्टनिष्ठमाद्रियामहे । तच्च विशेषणविशेष्योभयगतमित्यसन्दिग्धम् । नह्यत्रैकेनेतरस्यान्यथासिद्धिशङ्काप्यस्ति । नवाऽतिप्रसङ्गः शङ्क्यः नहि मृद्विशिष्टमाकाशं घटकारणमित्यत्र किञ्चिदस्ति प्रमाणम् । नवाऽऽकाशस्य कारणत्वं श्रुतं, नवा मृत्पद तद्विशिष्टवाचकं नवाऽऽकाशस्य मृदपृथक्सिद्ध विशेषणं, येन तस्यापि कारणत्वं स्यात् । अत इदमप्युन्मादविलसितम् । नहि चिदचितो: कारणत्वे सिद्धे कारणान्तर कल्प्यमित्युन्मादविलसितम् । नहि तयो: कारणत्वं श्रुत, नवा युक्तम् । कारणगतैकाद्वितीयश्रुतिविरोधात् । द्वयो: पर कारणत्वविरोधात् । अचेतनचेतनयो: परतन्त्रयो: स्वतन्त्रकारणताविरोधात् । अनुपपत्तिप्रतिषेधाभ्यां तदसम्भवाच्च । अचेतनस्यहि नस्वतन्त्रप्रवृत्ति: जीवस्य हि जगद्व्यापारो निषिद्धः 'जगद्व्यापारवर्ज' इति । विशेषणस्य कारणत्वापरित्यागादेव मृदादेर्घटादिकारणत्वप्रत्याख्यान दूषणमप्युन्मादविलसितम् ॥

यदपि विशेषणविशेष्यभावे कामचारात् ब्रह्मविशिष्टयो: चिदचितो: कारणत्वं किं नस्यादिति दूषणं तदप्युन्मादविलसितम । चिदचितो: ब्रह्माधीनत्व तच्छरीरत्व तत्पाल्यत्वादिभिस्तद्विशेषणतैकस्वभावत्ववत् ब्रह्मणोऽन्यशेषतायाः क्वाप्यश्रवणात् । स्वतन्त्रस्यान्यशेषत्वानुपपत्तेः कामचारस्तु शाब्दे प्रयोगे नच तेन वास्तव वैशिष्ट्यम् । नहि राजपुरुषइति निर्देशमात्राद्वास्तव राज्ञ: पुरुषविशेषणत्वं तत्प्रयुक्तंवा राज्यपरिपालन कश्चिदनुन्मत्त आपादयति । चिदचिद्गत स्वरूपस्वभावान्यथाभावस्तद्वारा ब्रह्मणि सङ्क्रामतीत्यत्रापि न दोषः । अपृथक्सिद्धविशेषणगतानां अवस्थानां कारणत्वघटकानां ब्रह्मणउपादानत्वबोधक श्रुतिबलादेव तत्सङ्क्रमाङ्गीकारात् । नचैतावता ब्रह्मण: कारणत्वत्याग: । यागगत श्रुतकारणतानिर्वाहाय कल्प्यनानापूर्वकरणत्वस्येव तदुपपादकत्वात् । न वा तद्गतजडत्वादेरपि तत्र प्रसङ्ग । तत्कल्पकानुपलम्भात् तेनाविनाऽनुपपत्त्यभावात् । कारणत्वस्येव तेषामश्रुतत्वात् प्रत्युत निषेधात् । दृश्यतेहि शरीरद्वारक जन्ममरणादिकं जीवगतं जडत्वपरतन्त्रत्वादिकन्तु न दृश्यते ।

अतएव स्वरूपस्वभावविवेचनमपि नव्यर्थम् । नह्याश्रयाश्रयितामात्रात्तदाश्रयत्वं घटत्वादेरपि भूतलाश्रितत्वप्रसङ्गात् । अपित्वाश्रयताग्राहके सति प्रमाणे नहि दण्डादे: कारणस्य घटादिकारणत्वं दृष्टमित्येतावता कुलालपित्रादेरपि कारणत्वं कश्चिदभ्युपैति । कारणताग्राहकयोस्तदन्वयव्यतिरेकयोस्तत्राभा

वात् । एवं ब्रह्मण उपादानत्वश्रवणाच्चिदचितोस्तच्छरीरत्वाभिधानस्यानन्यार्थस्य तन्निर्वाहकैकान्त्यात् । बालशरीरावच्छिन्नस्यात्मनो युवादिशरीर प्रतीव सूक्ष्मावस्थाचिदचिच्छरीरकस्य परमात्मनः स्थूलावस्थतच्छरीरं प्रत्युपादानता युक्ता । अत एव प्रकारप्रकारिणोरभेदापादनमप्युन्मादविलसितम् । सद्वारकतद्धर्माश्रयत्वस्य तदभेदनैयत्याभावात् । दृश्यते हि जलपूर्णकुम्भवोढुर्जलवोढृत्वं । नचैनावता कुम्भपुरुषयोरभेदः । दृश्यतेच भृत्यगतजयपराजयादिभीराज्ञो जयित्व पराजित त्वादिव्यवहार । नच भृत्यराज्ञोरभेदः । नवा शरीरद्वारकस्थूलत्वकृशत्वाद्याश्रयत्वमादाय स्थूलोऽहं कृशोऽहमिति व्यवहारे शरीरात्मनोरभेद । एतकस्य हेतो. ? तद्भेदतद्द्वारकधर्माश्रयत्वाश्रयणेऽपि साक्षात्परम्परासम्बन्धभेदेनाश्रयत्वे सति दोषाभावात् । अस्तिहि विशेषग्राहके तुल्यरूप तदाश्रयत्व पतित्वतुल्य रूप, यथा दम्पत्यो. कर्तृत्वम् । तत्रहि पत्न्या अनुज्ञादानेन पतिद्वारक । एवमिहाप्यस्तु वैलक्षण्यं प्रामाणिकत्वात् । नहि यजमानर्त्विग्भ्यां क्रियमाणेऽपि क्रतावुभयोरेकरूपकर्तृत्वम्, अपितु स्वतन्त्रास्वतन्त्रत्वघटितम् । तत्रापि द्रव्यत्यागादौ प्रधाने ऋत्विजामनन्वय. । आध्वर्यवादौतु तद्द्वारकं यजमानकर्तृत्वम् । ऋत्विजान्त्वद्वारकम् । एवं चिदचिद्द्वारक स्वरूपज्ञानाऽन्यथात्वरूपनिकारास्पदत्वं साक्षात् । चिदचितोः अन्तर्यामित्वावस्थायान्तु चिदचितोरनन्वयएवेतीयान् विशेषः । एव कारणत्वस्य व्यासज्यवृत्तित्वेऽव्यासज्यवृत्तित्वे वा नकश्चिद्दोष. । निमित्तत्वन्तु विशेष्यमात्रनिष्ठ उपादानत्वं विशिष्टनिष्ठम् । विशिष्टानन्यत्वान्निमित्ताभिन्नमुपादानमित्यत्र नविरोध । अतएव तृतीयेऽपि नविरोधः ॥

यत्वेतत्पक्षेऽपि चिदचिद्द्वारा उपादानत्वमिव विकारिगत जडत्व सांसारिकत्वादिः, स्त्रीत्व पुंस्त्वादिभिः भर्तृभार्ययोः, पितापुत्रयोः पाण्डित्यमौर्ख्यादिश्च प्रसज्येतेति दूषणम्, तत् तदापादकप्रमाणाभावादुन्मादविलसितमित्युक्तमेव । इदानी जडत्वाद्यापादक किं उपादानत्वश्रुतिरेव ? किंवा शरीरत्व श्रुति. ? किंवाऽविनाभावमात्रम् ? अथवा तत्सम्बन्धएव ? यद्वा संक्रमणावस्था सामानाधिकरण्यम् ? नाद्यः । अवस्थान्तरापत्तिमात्ररूपस्योपादानत्वस्यावस्थाश्रयत्वमात्रसापेक्षस्य जडत्वापत्यनापत्योरुदासीनत्वात् । न द्वितीयः त्वच्छरीर गत जडत्वादेस्त्वय्येवादर्शनेन त्वय्येव व्यभिचारात् । अतएव न संसारित्व प्रसङ्गोऽपि कर्मसम्बन्धनिबन्धनस्य सांसारिकत्वस्य तदसम्बन्धिनि परमात्म-

न्यप्रसङ्गाच्च। अतएव मूर्खस्य पितु पुत्रद्वारा पण्डितत्वं भर्तृभार्यादि स्त्रीत्व पुंस्त्वादिप्रसङ्गोऽपि दूरोत्सारितः। असतिप्रमाणे अपृथक्सिद्धेष्वसतः पृथक्सिद्धेषु सुनरामप्रसक्ते.। न तृनीय. अविनाभावस्य ज्ञापकतामात्रनिमित्तस्य तत्तद्धर्मसम्बन्धानिमित्तत्वात्। नहि वह्न्यविनाभूतस्य धूमस्य वह्नित्वसम्बन्धः केनचिद्दृष्टः श्रुतोवा। अतएव नचतुर्थः घटसम्बन्धिपटादौ घटत्वादिसम्बन्धादर्शनात्। जपास्फटिकादावपि न लौहित्यसंक्रमः। अपितु तत्प्रतिभासमात्रं जपात्वादिसक्रमादर्शनात्। अतएव नपञ्चमः सामानाधिकरण्यमात्रस्यान्यत्र धर्मसंक्रान्तावनियामकत्वात्॥

यत्तु यद्युपादानत्वश्रवणात् अवस्थाश्रयत्व कल्प्यते तर्हि 'विज्ञानघनएवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति विनाशित्वं 'न प्रेत्य संज्ञास्ति' इति जडत्वं च श्रुतमेवेति तत्प्रसङ्गोऽपि दुर्वारइत्युक्तं, तदप्युन्माद विलसितम्। उदाहृतवाक्यस्य जीवविषयत्वात्। अत्र हि जीवस्य मुक्त्यवस्था प्रतिपाद्यते। 'विज्ञानघनो जीवः पञ्चभूतमयं शरीरं विसृज्य तद्विशरणानन्तरमेव महद्भूतं परमात्मानमनुविनश्यति, परमात्मनि लीनो भवति देवादिनामरूपप्रहाणात्' इत्यर्थः। अविलम्बितत्वप्रतिपादनाय 'तान्यनु' इत्युक्तिः। जीववियोगोत्तरक्षणएव विशरणं भवति तदुत्तरक्षणएव ब्रह्मप्राप्तिर्भवति नविलम्ब इति भावः। एवं नप्रेत्य संज्ञाऽस्तीत्यपि जीवस्य मोक्षाभिप्रायं देवादि संज्ञाभावप्रतिपादनपरं, न जडत्वप्रतिपादनपरम्। एव 'स सर्वमायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम्' इत्यपि जीवविषयम्। मायोपधानस्य ब्रह्मण्यसम्भवात्। 'शरीरमास्थाय' इत्यस्यापि तत्रैव स्वरसत्वात्। 'ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवाउत' इत्यपि ब्रह्मणः सर्वात्मकतापरं, नतु तस्य संसारित्वपम्। अकर्मवश्ये तस्मिन् ससारगन्धासम्भवात्। 'अनश्नन्नन्यो अभिचाकशीति' इतिहि श्रुतिः। दाशाद्यभेदनिर्देशस्तु जीवस्य परमात्मांशित्वप्रतिपादनायेत्याह सूत्रकारः 'अंशो नानाव्यपदेशादन्यथाचापि दाशकितवादित्वमधीयतएके' (ब्र,सू.२.३.४२) इति॥

यद्यपि 'नानाव्यपदेशात्' इति भेदव्यपदेशस्य 'अन्यथाच' इत्यभेदव्यपदेशस्यचोक्तत्वात् दाशकितवादित्वव्यपदेशोऽनर्थकइति शङ्का प्रभवति—तथाऽपि राजा राष्ट्रमितिवन्नायमभेदनिर्देश औपचारिकः अप्रधाने प्रधानव्यपदेशः

हिसः । अयन्तु प्रधानेऽप्रधानव्यपदेशः । अतोऽयं ब्रह्मांशत्वमेवावलम्बते इत्येवमर्थतया सार्थक्यात् । विस्तरस्तु तत्त्वमार्ताण्डे ॥

एवं जडत्वादिनिर्देशाश्च जीवविषयाः 'नामानि कृत्वाऽभिवदन्यदास्ते' इति तु 'सर्वाणि रूपाणि विचित्य धीरः' इति प्रक्रमान्नामरूपव्याकरणप्रयुक्त सर्वनामभाक्त्वमाह, न संसारित्वम् । 'स एष इहप्रविष्ट आनखाग्रेभ्य' इत्यपि सर्वान्तःप्रवेशमाह, न संसारित्वम् । 'सम्भोगप्राप्तिरितिचेन्नवैशेष्यात्' इति सूत्रकारैरेव तन्निषेधात् ॥

यदपि सद्वारकावस्थान्तरापत्तेर्वास्तवत्वावास्तवत्वाविकल्पनं तदप्युन्मादविलसितम् श्रुतिप्रमितस्य वास्तवत्वशङ्कायोऽगात् । वास्तवत्वे सकलवेदान्तव्याकोपे इत्युन्मादविलसितमेव । सकलवेदान्तानां कारणविषयत्वात् । कारणत्वस्यचावस्थान्तरापत्तिरूपत्वात् । तस्य च स्वशरीरभूत चिदचिद्द्वारकस्याविरोधात् । जीवे बाल्याद्यवस्थावदित्युक्तम् । निर्विकारत्वश्रुतिस्तु साक्षात्स्वरूपविकाराभावपरेति न कस्यापि वेदान्तवाक्यस्य व्याकोपः । प्रत्युत विशिष्टस्य ब्रह्मशब्दवाच्यत्वं सूक्ष्मावस्थ स्थूलावस्थ चिदचितां तच्छरीरत्वं, तस्योपादानत्वं सर्वतादात्म्यं, बहुस्यामिति सङ्कल्प , एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं, मृदादिदृष्टान्तश्चेत्येवमादिबोधयन्वेदान्तवाक्यगणस्तत्रैवानुकूलइति ॥

एतेन किमयं सद्वारकपरिणामः प्राप्तश्श्रुतिभिरनूद्यते, उत श्रुतिभिर्विधीयत इति विकल्पोऽप्युन्मादविलसितः । सर्ववेदान्ततात्पर्यविषयस्य भ्रमासिद्धत्वानुपपत्तेः । 'नजायते' इत्यस्य जीवगतस्वरूपोत्पत्तिनिषेधपरत्वात् । साचा चेतनगता तत्साहचर्याच्चेतने प्राप्ता निवार्यत इति 'सवा अयं पुरुषो जायमान श्शरीरमभिसम्पद्यमान उत्क्रामन्म्रियमाण' इति श्रुतिवशाद्विज्ञायते ॥

यत्तु श्रुतिप्राप्तस्य निषेधविकल्पापत्तिरिति कल्पनं, तत्, वस्तुनिविकल्पायोगादुन्मादविलसितमिति स्फुटमेव । अतो विधिनिषेधयोस्सद्वारकाद्वारकावस्थाश्रयत्वतदभावविषयकत्वाद्व्यवस्थितविषयतैव युक्ता ॥

यदपि 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्रहि' इत्यत्र पृथिव्यादिस्थानसम्बन्धात्परस्य ब्रह्मणो दोषासम्बन्ध उक्तः, अतो न तस्य कारणत्वमिति, तदप्युन्मादविलसितम् दोषनिरासेऽपि तच्छरीरकत्वप्रयुक्तोपादानत्वानिरासात् । नहि कारणत्वमुपादानत्वं वा दोषः, अपितु महामहिमावहत्वाद्गुणएव । यथाह

सूत्रकारः ' प्रकाशवच्चावैशेष्यम् ' इति। अत्र श्रीभाष्यं ' मूर्तामूर्तादिप्रपञ्चविशिष्टतायाअपि ब्रह्मगुणत्वादवैशेष्यम् ' इति। किंच नात्र पृथिव्यादिसम्बन्धो वार्यते। नवा तद्द्वारकतदीयधर्मसमन्वयः, अपितु तदन्वयप्रयुक्ततत्सजातीयगुणान्तरप्रादुर्भावः, तद्धेत्वभावात्। अतएव प्रतिपर्यायं ' अन्तर्याम्यमृतः ' इत्युच्यते इति। अतएव जीवस्यापि दोषसम्बन्धो नस्वरूपकृतः, नवा पृथिव्यादि भूतसङ्घातसम्बन्धकृतः, जीवानादिकर्म सम्बन्धनिबन्धनः। परमात्मनस्तु अपहतपाप्मनो न कर्मसम्बन्धगन्धः। पृथिव्यादीनिच वस्तूनि न सुखात्मकानि, नापि दुःखात्मकानि। ' तस्माद्दुःखात्मकं नास्ति नच किंचित्सुखात्मकम् ' इति महर्षिवचनात्। अतो न तत्सम्बन्धमात्रं दुःखादिहेतुः। अवस्थान्तरमपि नसुखं, नापि दुःखं, नापि दोषान्तरम्। अचिद्गतस्वरूपविकारः, चिद्गतस्वभावज्ञानसंकोचादिविकारश्च तद्गतएवसन् परमात्मशरीरगतत्वात्तद्गतएव सम्पद्यते। साक्षात्तदाश्रयत्वन्तु प्रतिषिध्यते। यथाहि कर्तृत्वं पृथक्सिद्धऋत्विगादिद्वारकमपि यजमानादौ फलाय भवति, भृत्यादिगत जयपराजयादिकर्तृत्वं राजनि मुख्यम्, जलादिवहनक्रियानिरूपितं कुम्भादिपृथक्सिद्धद्वारकं मुख्यं कर्तृत्वं, करणत्वमपि पृथक्सिद्धद्वारकं चक्षुर्दण्डादिगतं मुख्यं ' सर्वेभ्यो दर्शपूर्णमासौ ' इत्यादावपूर्वादिद्वारकं मुख्यमुद्देश्यत्वम्, ' आदित्याज्जायते वृष्टिः ' इत्यादौ मेघादिद्वारक मुपादानत्वं मुख्यं, कटे आस्ते इत्यादौ प्रासादेशेते सद्वारकमद्वारकञ्चाधिकरणत्वं मुख्यम्। षष्ठ्याःपारम्पारिकत्वे नकस्यापि विवादो ' वाजपेयस्ययूप ' इत्यादौदृष्टः, तथा उपादानत्वमात्रे कुतो विद्वेषः? आश्रयत्वं च पारम्परिकं सति प्रमाणे सर्वेष्टमित्युक्तम्, तदिहापि चिदचिद्द्वारकमवस्थाश्रयत्वं प्रमाणप्रतिपन्नं न निषिद्धमपीति दिक्॥

' न स्थानतोऽपि परस्य ' इति सूत्राक्षराण्यपि तत्प्रयुक्तं परगतमेव हेयससम्बन्धमेव निषेधति, नतु पारम्पारिकं परस्येत्युक्तिस्वारस्यात् तेन पारम्पारिक तन्निषेधएव सूत्राक्षरानुगुण्यकथनमप्युन्मादविलसितम्। आहच सूत्रकारः ' सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् ' इति। अत्रहि जीवशरीरे जीववत्परमात्मनोऽप्यवस्थाने जीववदेव तस्यापि दुःखित्वादिकं स्यात्, इत्याक्षिप्य कर्मसम्बन्धप्रयुक्तं दुःखित्वं जीवस्यास्ति न परमात्मनः, अपहतपाप्मत्वात्तस्येति समाहितम्॥

ननु सत्यं तत्र यदुक्तं तथाऽपि 'नस्थानतोऽपि' इत्यनेनापि तदेवचेदुच्येत पौनरुक्त्यंस्यात् अत: परम्परयाऽपि तद्गतविकारासम्बन्धएवात्र प्रतिपाद्यत इति न चिदचिद्द्वारापि तद्गतावस्थासम्बन्ध: कल्पयितुं शक्य इति चेत्—मैवम् अस्याक्षेपस्य भाष्यएव दत्तोत्तरत्वात्। इत्थंहि तत्र भाष्य 'ननु सम्भोगप्राप्तिरितिचेन्नवैशेष्यात्' 'स्थित्यदनाभ्यां च' इत्यत्रच परस्याकर्मवश्यत्वेन दोषाभाव उक्त: । अत: कथं अकर्मवश्यस्य ब्रह्मणस्तत्तत्स्थानसम्बन्धमात्राद्दोष उच्यते? इत्थमुच्यते कर्माण्यपि हि देहसम्बन्धमापादयन्त्यपुरुषार्थजननानि भवन्तीति 'देहयोगाद्वा' इत्यत्रोक्तम्। तच्च देहसम्बन्धस्यापुरुषार्थत्वे न भवति। इतरथा कर्माण्येव दु:खं जनयन्तीति किं देहसम्बन्धेन? अतोऽकर्मवश्यत्वेसत्यपि नानाविधदेहसम्बन्धोऽपुरुषार्थएव, अतस्तन्नियमनार्थं स्वेच्छया तत्प्रवेशेऽपि अपुरुषार्थसम्बन्धोऽवर्जनीय:; पूयशोणितादिमज्जनं हि स्वेच्छाकारिमप्यपुरुषार्थएव ॥

अत' यद्यपि जगदेककारणं सर्वज्ञत्वादिकल्याणगुणाकरंच ब्रह्म तथाऽपि 'य:पृथिव्यां तिष्ठन्, यआत्मनि तिष्ठन् यो रेतसि तिष्ठन्' इत्यादिवचनात्तत्र तत्राऽवस्थितस्य तत्तत्सम्बन्धरूपाऽपुरुषार्थास्सन्त्येवेति' इति। अत्रहि कर्मसम्बन्धो यद्यपि नास्ति तथाऽपि देहसम्बन्धस्यैव दु:खजानकत्वात् पृथिव्यादेर्देहत्वे तत्सम्बन्धाद्दु:खादिप्रसक्तिर्जीवस्येव दुर्वारेत्याश (ङ्क्य) ङ्का ॥ अपहतपाप्मन: परमात्मन न देहसम्बन्धमात्रात् दु:खादिप्रसक्ति: । न च जीवस्याप्यपहतपाप्मत्वादे: प्रजापतिवाक्ये श्रवणादतिप्रसङ्ग:, पराभिध्यानेन तस्य संसारित्वावस्थायां तिरोधानात्। परमात्मनस्तु तत्तिरोधानाभावात् । अत एव प्रतिपर्यायं पृथिव्यादिस्थस्यापि तस्यामृतत्वमुच्यते। अत एवच 'अरूपवदेव हि तत्प्रधानत्वात्' इति तस्यारूपवद्भाव: उच्यते, नत्वरूपत्वम् । अत एव 'एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदु:खेन बाह्य:' इत्यत्रापि जीवशरीरकत्वेऽपि तत्प्रयुक्तेन दु:खेन न लिप्यते, तत्र हेतु: बाह्य इति। दु:खसम्बन्धानर्ह: अपहतपाप्मत्वादिति यावत्। दु:खसम्बन्धिजीवान्तरात्मनोऽस्य बाह्यत्वं नाम उक्तरूपमेव, नतु तद्देशादन्यदेशस्थत्वम् असम्भवात्। अत एव हि स्वस्मिन्नुत्पद्यमानस्य दु:खस्य स्वय बाह्यो भवतीति कथनमपि उन्मादविलसितम् ॥

किं च नान्यसम्बन्धात्तद्गतधर्माणामन्यत्र संक्रमः , आश्रयमन्तरा गुणानां सङ्क्रमायोगात् । अतः पातकिससर्गात् अन्यास्मिन् पातकमिव परमात्मन्यपि दुःखाद्युत्पत्तिरेवानेन वार्यते । दृष्टान्तेऽप्याक्षिप्रविष्टस्यादित्यस्य तत्सम्पर्काद्दोषान्तरोत्पत्तिरेव वार्यते । न लिप्यत इत्युक्तेरुत्पत्ति परत्वे विरोधः । 'कुर्वन्न लिप्यते, लिप्यते न सपापेन पद्मपत्रमिवाम्भसा, न कर्मणा लिप्यते पापकेन' इत्यादाविव तदविरोधात् । 'यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवं विदित्वा पापं कर्म न श्लिष्यते' इत्यादावपि तथात्वं दृष्टम् । अतइयं श्रुतिर्जीवदुःखेन ब्रह्मणो न सम्बन्धइत्येव प्रतिषेधति इति प्रतिज्ञाऽप्युन्मादविलसितैव ॥

किंच जीवदुःखेन ब्रह्मणः सम्बन्धो वार्यत इति वदता त्वया दुःख ब्रह्मणोर्वारणीयः सम्बन्धः कीदृश इति निरूपणीयम् । नतावत्साक्षादाश्रयाश्रयिभावः । अन्यवृत्तेरन्यस्मिंस्तदसम्भवात् । नापि सद्वारकं जीवे तत्सत्वे तद्द्वारा तत्सम्बन्धस्य दुर्निवारत्वात् । किंचान्यद्वाराऽन्यस्मिन्नन्यधर्मान्वयेऽतिप्रसङ्गः । अतस्तवमते जीवगतानां दुःखादीनां ब्रह्मण्यप्रसक्तानां कुतो निषेधः ॥

नन्वस्मादेव निषेधादविरुद्धानां सक्रमः सूच्यत इतिचेत्–आगतोऽसि मर्दीयं पन्थानम् । के विरुद्धाः केचाविरुद्धा इति विवेचनीयम् । ये प्रमितास्तेह्यविरुद्धाः तदन्ये विरुद्धाइतिचेत्–सत्यम् ततएवावस्थान्तरापत्तिरूपं कारणत्वं श्रुतमिति तदाश्रयत्वं ब्रह्मण्यङ्गीक्रियतां ; अन्यत्तु विरुद्धत्वात्त्यज्यतामिति नासदुक्तोपादानत्वविरोधः ॥

यदपि द्वासुपर्णेतिमन्त्रेण 'सयुजा सखाया समानवृक्षं परिषस्वजाते' इति ब्रह्मणा जीवसम्बन्धमुपपाद्य 'तयोरन्यःपिप्पलं स्वाद्वत्ति' इत्यनेन जीवस्य दुःखित्वमुक्त्वा 'अनश्नन्नन्यो अभिचाकशीति' इत्यनेन जीवद्वारकदुःखित्वस्य प्रसक्तस्य निषेधः क्रियते । इत्थमभ्युपगमे सद्वारकदोषसम्बन्धाज्जीववद्दीश्वरस्यापि दुःखित्व स्यात् । जीवेहि न कश्चिद्दोष उत्पद्यते, किंतु सर्वेदोषा जीवस्य सद्वारकाएव । 'कामा येऽस्य हृदि श्रिताः 'तीर्णोहि तदा सर्वान् शोकान् हृदयस्य भवति 'ह्रीर्धीर्भीरित्येतत्सर्वं मनएव' इत्यादिश्रुतिभिः—

इच्छाद्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥

ननु सत्यं तत्र यदुक्तं तथाऽपि 'नस्थानतोऽपि' इत्यनेनापि तदेवचेदुच्येत पौनरुक्त्यंस्यात् अतः परम्परयाऽपि तद्गतविकारासम्बन्धएवात्र प्रतिपाद्यत इति न चिदचिद्द्वारापि तद्गतावस्थासम्बन्धः कल्पयितुं शक्य इति चेत्—मैवम् अस्याक्षेपस्य भाष्यएव दत्तोत्तरत्वात्। इत्थंहि तत्र भाष्य 'ननु सम्भोगप्राप्तिरितिचेन्नवैशेष्यात्' 'स्थित्यदनाभ्यां च' इत्यत्रच परस्याकर्मवश्यत्वेन दोषाभाव उक्तः । अतः कथं अकर्मवश्यस्य ब्रह्मणस्तत्तत्स्थानसम्बन्धमात्राद्दोष उच्यते ? इत्थमुच्यते कर्माण्यपि हि देहसम्बन्धमापादयन्त्यपुरुषार्थजननानि भवन्तीति 'देहयोगाद्वा' इत्यत्रोक्तम्। तच्च देहसम्बन्धस्यापुरुषार्थत्वे न भवति। इतरथा कर्माण्येव दुःखं जनयन्तीति किं देहसम्बन्धेन ? अतोऽकर्मवश्यत्वेसत्यपि नानाविधदेहसम्बन्धोऽपुरुषार्थएव , अतस्तन्नियमनार्थं स्वेच्छया तत्प्रवेशेऽपि अपुरुषार्थसम्बन्धोऽवर्जनीयः ; पूयशोणितादिमजनं हि स्वेच्छाकारमप्यपुरुषार्थएव ॥

अतः यद्यपि जगदेककारणं सर्वज्ञत्वादिकल्याणगुणाकरंच ब्रह्म तथाऽपि 'यःपृथिव्यां तिष्ठन्, यआत्मनि तिष्ठन् यो रेतसि तिष्ठन्' इत्यादिवचनात्तत्र तत्राऽवस्थितस्य तत्तत्सम्बन्धरूपाऽपुरुषार्थास्सन्त्येवेति' इति। अत्रहि कर्मसम्बन्धो यद्यपि नास्ति तथाऽपि देहसम्बन्धस्यैव दुःखजानकत्वात् पृथिव्यादेर्देहत्वे तत्सम्बन्धाद्दुःखादिप्रसक्तिर्जीवस्येव दुर्वारेत्याश (ङ्कय) ङ्का ॥ अपहत पाप्मनः परमात्मन न देहसम्बन्धमात्रात् दुःखादिप्रसक्तिः । न च जीवस्याप्यपहतपाप्मत्वादेः प्रजापतिवाक्ये श्रवणादतिप्रसङ्गः , पराभिध्यानेन तस्य संसारित्वावस्थायां तिरोधानात्। परमात्मनस्तु तत्तिरोधानाभावात् । अत एव प्रतिपर्यायं पृथिव्यादिस्थस्यापि तस्यामृतत्वमुच्यते। अत एवच 'अरूपवदेव हि तत्प्रधानत्वात्' इति तस्यारूपवद्भावः उच्यते, नत्वरूपत्वम् । अत एव 'एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' इत्यत्रापि जीवशरीरकत्वेऽपि तत्प्रयुक्तेन दुःखेन न लिप्यते , तत्र हेतुः बाह्य इति। दुःख सम्बन्धानर्हः अपहतपाप्मत्वादिति यावत्। दुःखसम्बन्धिजीवान्तरात्मनोऽस्य बाह्यत्वं नाम उक्तरूपमेव, नतु तद्देशादन्यदेशस्थत्वम् असम्भवात्। अत एव हि स्वस्मिन्नुत्पद्यमानस्य दुःखस्य स्वय बाह्यो भवतीति कथनमपि उन्मादविलासितम् ॥

'कामा येऽस्य हृदि श्रिता' इत्यादिकं तु कामानां मनोगोचरत्वात्। 'हृदयस्य' इत्यपि सम्बन्धसामान्ये, नत्वाश्रयत्वे मानम्। 'अस्यैतान् कामान पश्यन्तीति' श्रुत्यन्तरविरोधात्। एवं 'ह्रीर्धीर्भीरित्येतत्सर्वं मनएव' इति तु 'आयुर्वै घृतं, चक्षुर्वै सत्यम' इत्यादिवदौपचारिकम्। एवमिच्छाद्वेषादेरपि आत्मगुणस्य क्षेत्रान्तर्भावायोगात् 'एतत् क्षेत्र' इति सामानाधिकरण्यमप्यौपचारिकमेव। अन्यथा चेतनाया अपि क्षेत्रधर्मत्वे शरीरातिरिक्तात्मासिद्धिप्रसङ्गः। क्षेत्रज्ञत्वोक्त्याहि क्षेत्रगोचरं ज्ञानमात्मधर्म इत्यवगम्यते। गीयते च

तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्।

इति। अज्ञानं हि ज्ञानावरणमुच्यते। तदावरणं च तत्सङ्कोचएव। नहि जडे आवरणं त्वयाऽप्यङ्गीक्रियते—

तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंहिता।
सर्वभूतेषु भूपाल तारतम्येन वर्तते॥

इतिह्युच्यते। 'पराभिध्यानात्तु तिरोहितम्' इति सूत्रकारोऽप्याह। 'गुणाद्वाऽऽलोकवत्' इति आलोकदृष्टान्तेनचात्मधर्मत्वं ज्ञानस्यावगतम्। इच्छादयस्तु ज्ञानविशेषा इत्युक्तम् अतस्तेषां मनोधर्मत्वोक्तिरप्युन्मादविलसितैव। अतएवेश्वरसाधारण्यशङ्काऽपि दूरनिरस्ता जीवे कर्मनिबन्धनतत्तद्दोषसङ्क्रान्तेर्वास्तव्यात् तत्सम्बन्धगन्धशून्यब्रह्मध्यानेन निवृत्तेश्च वेदान्तसिद्धतया तयोरत्यन्तविलक्षणयोः साधारण्यशङ्काऽनुत्थानात्। अतश्चिदचिद्द्वारकः परिणामो ब्रह्मणि श्रुतिप्रमितो दुरपह्नवः। अतो मायाद्वारा ब्रह्मण परिणामो न श्रुतिविधेय इत्यप्युन्मादविलसितमेव। मायाया अस्माभिरनङ्गीकारात्। चिदचिद्द्वारकपरिणामस्य श्रुतिविधेयत्वोपपादनाच्च। अतएवोपचारपक्षोक्तदूषणान्यप्यनभिमतदूषणत्वादुन्मादविलसितान्येव। नापि तद्दूषणान्यपि चतुरश्राणि। कारणत्वं चिदचिद्गतं ब्रह्मण्युपचर्यमाणं भृत्यसङ्गतं शत्रुहन्तृत्वं राजनि वास्तवं स्यादित्यप्युन्मादविलसितम्। भृत्यगतं शत्रुहन्तृत्वं प्रत्यक्षेणोपलभ्यमानं युक्तम् यद्राजन्यौपचारिकत्वशङ्काऽर्हं स्यात्, नह्येवं चिदचितोः कारणतायां किंचिदस्ति प्रमाणम्। श्रुतब्रह्मकारणतानिर्वाहकतया ब्रह्मशरीरत्वेन प्रमितयोश्चिदचितोरवस्थान्तरभावो दृष्टान्तानुसारात्कल्प्यते। नच तेन यागस्यापूर्वेणेव ब्रह्मणः कारणत्वम् औपचारिकं कल्पयितुं युक्तम्॥

ननु युक्त यागजन्यमपूर्वं यद्द्वारतां प्रतिपद्यते अतस्तद्द्वारकं कारणत्वमपि मुख्यमिति। चिदचितोस्तु ब्रह्मजन्ययोः कुतस्तद्द्वारत्व, कुतो वा तद्द्वारक कारणत्वमप्यनौपचारिकं स्यादित्युक्तमितिचेत्। सत्यमुक्तम् उन्मादविलसित तत् अजन्यत्वेऽपि क्रयकारणीभूतारुण्यादेरेकहायनीद्रव्यादिवद्द्वारत्वाविरोधात ॥

अथ तत्रारुण्यस्यामूर्तस्य साक्षात्क्रयसाधनत्वायोगात्, तृतीयाश्रुत्यवगतं क्रयसाधनत्व तदाश्रयद्रव्येणैव निर्वहतीति तत्तकारणतानिर्वाहकत्वाद्युक्तं तद्द्वारत्व तस्येतिचेत् सत्य त्यज तर्हि जन्यस्यैव द्वारत्वमिति प्रतिज्ञाम्। ब्रह्मणोऽपि पञ्चमीश्रुत्याद्यवगतमुपादानत्व निर्विकारस्य साक्षान्न निर्वतीति तन्निर्वाहकयोश्चिदचितोरप्यस्तु द्वारत्वम्। ततश्च 'चक्षुषा पश्यति, काष्ठै पचति' 'व्रीहिभिर्यजेत' इत्यादौ जन्यस्य संयोगज्वालापुरोडाशादेरिव 'अरुणया क्रीणाति, पशुना यजेत' इत्यादावजन्यस्यापि द्वारत्वदर्शनात जन्याजन्यसाधारण तत्तत्क्रियानिर्वाहकत्वरूपं तद्द्वारत्व वाच्यमिति चिदचितोरपि ब्रह्मगतकारणतानिर्वाहकयोस्तद्द्वारत्वमविरुद्धम् ॥

वस्तुतस्तु—सर्वस्यापि ब्रह्मकार्यत्वम्। 'इद सर्वमसृजत' इत्यादौ प्रमितम्। सर्व चिदचिद्रूपम्। अतस्तयोर्ब्रह्माजन्यत्ववचनमप्युन्मादविलसितमेव। अतएव सूत्रकारेणापि ज्योतिरुपक्रमाधिकरणे आत्माधिकरणेच तयोर्ब्रह्मजन्यत्वमुच्यते। तत्किमसन्तावेव चिदचितावुत्पद्येते कुतस्तर्हि सत्कार्यवादो जीवेत्। 'सदेव सोम्येदमग्रआसीत' 'सदेव नीयते व्यक्ति असत सम्भवः कुतः' इति श्रुतिस्मृतीच कथं सङ्गच्छेत। सूक्ष्मावस्थयोश्चिदचितोस्सतोः स्थूलावस्था रूपोत्पत्तेरङ्गीकारात्सर्व सम्यगुपपद्यते। अभिव्यक्ति' नामरूपाहावस्थाहि सर्व वस्तु विभक्तनामरूपावस्थं कुर्वत् ब्रह्म तत्कारणमुच्यते। तेन तदेवाद्वारकं निमित्त सद्वारकमुपादानञ्चेत्यविरुद्धमेव ॥

ननु भाव्यवस्थाविशिष्टप्रति प्रागवस्थाविशिष्टमुपादान भवति। प्रागवस्था च सद्वारिका त्वयास्वीकृता तदवस्थ च द्रव्यमकार्यमिति तस्य कथ द्वारत्वमुपपद्यते? इत्थमुपपद्यते अवस्थाद्वयवतो द्रव्यस्याभेदेन कार्यत्वापरित्यागात्। त्वयाऽपि हि शरीरद्वारकं दुःखित्वादिजीवस्य वदता कार्यस्य द्वारत्वमङ्गीकुर्वता प्रागवस्थाविशिष्टस्य शरीरस्य जीवजन्यत्वाभावादुत्तरावस्थाविशिष्टस्य तस्यकार्य-

त्वमस्तीति तदभेदादेव तस्य तद्द्वारत्वमाश्रयणीयम् । तच्च समानमस्मन्मतेऽपि नहि चेतनानधिष्ठितं शरीरमात्रं परिणामक्षमम् । नवा बालो युवाजात इति व्यवहारश्शरीरमात्रविषय सर्वलोकविरोधात् । तच्च चिद्द्वारकमवस्थाश्रयत्वं मुख्यमेव अतः श्रुतार्थापत्तिमूलकं कल्पनिकं चिदचितोः कारणत्वं न श्रौतस्य ब्रह्मकारणत्वस्यौपचारिकतां कल्पयितुं क्षममिति भृत्यगतजयस्य राजनीवेति दृष्टान्तप्रदर्शनमुन्मादविलसितम् ॥

वस्तुतस्तु जयापजयावुत्कर्षापकर्षौ भृत्यव्यापारफले । तेच परिक्रीतर्त्विक्कर्तृकव्यापारनिचयनिष्पन्नकर्मफलवद्भृतिक्रीतभृत्यकर्तृकव्यापारनिचय निष्पाद्यतया प्रधानफलतया च यजमानगते एव । यत् यत्प्रयोज्यव्यापारनिचय जन्यं प्रधानफलं तत् तद्गामीति व्याप्तेः कृषिपाकादौ दृष्टत्वात् । अतोऽवान्तरफलतद्व्यतिरेकयोः प्रयोज्यगतत्वे न दोषः । यत्प्रयोज्येत्यत्र यदुद्देश्यकजनकव्यापारप्रयोज्यत्वमर्थो विवक्षितं तेन पुत्रगतपूतत्वादिफलस्य पितृगतव्यापारप्रयोज्यस्य पितृगामित्वाभावेऽपि न दोषः । एवं च राज्ञः 'जयोमम स्यात्' इति भृत्यानां प्रेरणात् तद्व्यापारजन्य प्रधानफलं तद्व्यतिरेकोवा राजगाम्येवेति तत्रैव तस्यौपचारिकत्वकल्पनमुन्मादविलसितमेव ॥

यत्तु तत्रान्तरालिकफलं दक्षिणालाभादिरूपमिष्टं गललग्नपुरोडाशादिजन्यमरणादिरूपमिष्टं वा ऋत्विगादिगामीति तन्नयजमानगामि अवान्तरफलत्वात् । अतएव राजभृत्येषु शत्रुभिर्हतेषु राजा मृतस्स्यात् राजदाराणां वैधव्यं स्यादिति दूषणमुन्मादविलसितम् ॥ दृश्यते हि पित्रुद्देश्यकब्राह्मणेषु तृप्तेषु पितरस्तृप्ताइति व्यवहारः । नचास्यौपचारिकत्व नास्तिकान्यस्य धियमारोहति ॥

यच्च चतुर्थे कारणद्वयप्रसङ्गापादानं तदप्युन्मादविलसितम् । अपूर्वस्य स्वर्गनिरूपितं यागगतकारणताद्वारत्ववच्चिदचितोरपि द्वारकारणतायाइष्टत्वात् । समप्राधान्यभावे हेत्वभावात् । दुर्जनदृष्टान्तोऽप्यसमीचीनः । तत्र तद्गतदौर्जन्यं प्रति पुरुषान्तरस्याद्वारत्वात् । जन्यस्यैव त्वया द्वारत्वाङ्गीकारात् ब्रह्मणो निर्विकारत्वहानिस्तूद्भृतैव । उपान्त्यान्तिमपक्षौत्वनभिमतकल्पनारूपत्वादुन्माद विलसितावेव ॥

यत्त्वारोपितपक्षस्य प्रामाणिकत्वसमर्थनाय श्रुतिस्मृत्युदाहरणं स्वगुरुग्रन्थसम्मतिप्रदर्शनं च तदप्युन्मादविलसितम् । श्रुतिस्मृत्योरन्यपरत्वात्—

तत्रैवं सतिकर्तारमात्मानं केवलन्तु यः ।
पश्यत्यकृतबुद्धित्वान्नसपश्यति दुर्मतिः ॥

इति प्रकृतिवियुक्तस्य केवलस्यात्मनः कर्तृत्वाभाव उच्यते । अत्र केवलशब्दः

अधिष्ठानं तथा कर्ता करणंच पृथग्विधम् ।
विविधाच पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥

इत्युक्तस्वेतरकारणचतुष्टयासाहित्यपरः—

शरीरवाङ्मनोभिर्यत् कर्मप्रारभते नरः ।
न्याय्यं वा विपरीतं वा पंचैते तस्य हेतवः ॥

इत्यव्यवहितवचनानुसारात् । तत्र केवलात्मस्वरूपप्रयुक्तताया भ्रान्तिरूपता प्रदर्शनायैव, इवशब्दप्रयोगात् । केवलस्यात्मनः प्रजापतिवाक्योक्तप्रकारेण अपहतपाप्मत्वादिगुणवैशिष्ट्याद्युपाधिगतं कर्तृत्वं, आत्मन्यारोपितमिति कल्पनन्तूपहास्यम् । अन्तःकरणरूपस्य अविद्यारूपस्य वा उपाधेरचेतनस्य कर्तृत्वशून्यतया तद्गत कर्तृत्वस्यैवासिद्धेः तस्यान्यत्रारोपइत्यस्य मूलशैथिल्यात् । यद्धि यत्र वास्तवं तद्ध्यन्यत्रारोपार्हं—

प्रकृतेः क्रियमाणानि गुणैःकर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥

इत्यपि गुणानां तत्र हेतुत्वमाह, पञ्चैते हेतव इत्यनुसारात् । अन्यथा 'कर्ता शास्त्रार्थवत्त्वात्' इत्यधिकरणविरोधात् । तथाच गीयते—

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेवच ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ इत्यादि—

मरुभूमौ जलत्वेन मध्याह्नार्कमरीचिका ।
दृश्यते मूढचित्तस्य नह्यार्द्रस्तावता रविः ॥

तद्वदात्मापि निर्लेपो दृश्यते मूढचेतसाम् ।
स्वाविद्यामात्रदोषेण कर्तृत्वादिकधर्मवान् ॥

इति शिवगीतावचनेऽपि केवलस्यात्मनः कर्तृत्वं व्यामोहमात्रमित्युच्यते । तेन च दुःखित्वादि नस्वरूपमात्रप्रयुक्तमित्युच्यते । अतएव नैवार्द्रस्तावता रविरिति

तत्रैवाभिधीयते। एतद्विस्तरस्तु प्राचीननिबन्धनेषु अस्मद्विरोधभञ्जन्याम् अस्मत्कृताद्वैतवनकुठारभेदमणौ च द्रष्टव्यइत्युपरम्यते ॥

तदेव स्वरूपस्यान्यथाभावो ज्ञानसङ्कोचएव च ब्रह्मणि प्रतिषिध्यते. 'सत्यं ज्ञानम्' इति श्रुते.। सत्यस्य सत्यताऽप्येवं श्रुतिचोदिताऽविकारप्रतिषेधश्चाप्येतद्द्वितयगोचर.—

यतो निषेधस्सर्वत्र विहितव्यतिरिक्तग.।
उपादानत्वमेतस्य बह्वीषु श्रुतिषु श्रुतम् ॥
न तच्छ्रुत्यानिषेद्धव्यमप्रामाण्यप्रसङ्गत ।
स्थूलान्तर्यामिनारूपमनन्यथात्वमुपश्रुतम् ॥
ब्रह्मैव चिदचिद्द्वारा सर्वोपादानमिष्यते।
शरीरद्वारिकाऽवस्था बालत्वादिर्यथाऽऽत्मनि ॥
तथैव चिदचिद्द्वारा तदवस्थे परात्मनि।
तस्य सर्वशरीरत्वं यत. श्रुतिशतोदितम् ॥
सद्वाराऽद्वारकाऽवस्थाद्वययुक्तः परःपुमान्।
उपादानं निमित्तं च कृत्स्नस्य जगतो हरिः ॥
निर्विकारत्वाविरुद्धमुपादानत्वमीशगम्।
श्रुतिप्रामाण्यत प्राप्तं सूत्रवृत्त्यादिसम्मतम् ॥
विद्विषन्त. श्रुतिभ्रष्टा निर्विकारत्वमात्रगा.।
अहिंसाश्रुतिमात्रस्था बौद्धा एवेति मन्महे ॥
प्रच्छन्नप्रकटौ बौद्धौ श्रुतिविद्वेषिणावुभौ।
ब्रह्मणो निर्मिमाणस्य कार्यमार्यैर्विचार्यताम् ॥
आलोक्यस्य प्रतिष्ठार्थं तमो निर्माणवद्यदि।
सिद्धान्तस्य प्रतिष्ठार्थं तच्चेत्तद्युक्तमुत्तरम् ॥

बौद्धश्रद्धाऽध्वनीनश्रुतिविमतमतध्वान्तविध्वंसनोद्य-
न्मार्ताण्डोद्दण्डपाण्डित्यनुगुणसुगुणारम्भसरम्भभासः।
आचार्यास्मन्तुसन्तापदपदपदवी दुष्क्रियाऽऽविष्क्रियोद्यत्
शुष्कारण्योग्रजाग्रद्दवदहननिभा. भान्तु भाष्यार्थवित्ताः ॥

उन्मादजन्मा कुमतिप्रलाप·
तन्मानभङ्गाय भवत्यजस्रम् ।
सन्मानसामोदकर:परन्तु
सन्मानदोसामकवाक्प्रचार ॥

इति श्रीशैलकुलतिलक सर्वतन्त्रस्वतन्त्र श्रीनिवासार्य तनूजनुषा
लक्ष्माम्बागर्भशुक्ति मुक्ताफलवपुपा कौण्डिन्य
श्रीनिवासदीक्षितकटाक्षवीक्षासंलब्धमीमां-
साद्वन्द्व निर्द्वन्द्वमतिविभववपुषा
अग्रजाचार्यदीक्षित परिचर्यासमासादित
चतुस्तन्त्री तन्त्रो विनोदजुषा
श्रीनिवास विदुषा
विरचिते

## विरोध निरोधे—प्रथमो निरोधः

## अथ द्वितीयो निरोधः

शेषांशभाक् भाष्यकृदेष यस्मात्
द्विषो विपाग्निव्यतिपङ्कदण्ड्यात् ।
विधाय वोधाय सतां व्यतानीत्
वेदान्तभाष्यं भुवि यस्तमीडे ॥

ज्ञानावस्थामवस्थाप्य जीवस्य ज्ञातृतोदिता ।
विरोधोन्मेषमत्रोक्त मधुना विधुनोम्यहम् ॥

यत्तूक्तम्—ज्ञानावस्थापूर्विकाहि जीवस्य ज्ञातृता पूर्वमुपपादिता। ज्ञानावस्थैव तावद्दुस्था। सङ्कोचविकासात्मना हि सा, नैषा नित्यात्मस्वाभाविकधर्म

तया नित्यत्वेनाभिमतस्य युक्ता । विप्रतिषिद्धं हि नित्यत्वं सङ्कोचविकासौ चेति । उक्तं हि त्वयैव 'एवं चात्माकार्त्स्न्यम्' इत्यत्र 'नच पर्यायादप्यविरोध.' इत्यत्र आत्मन. शरीरपरिणामाभ्युपगमे गजपिपीलिकाशरीरयोः पर्यायेण प्रवेशे आत्मनोऽकृत्स्नत्व पर्यायशब्दित सकोचविकासाभ्यामविरुद्धमित्याशङ्कय . तथासत्यवयवोपचयापचयाभ्यामात्मनोऽनित्यत्वं घटवत्प्रसज्यते' इति । तथा च सकोचविकासयोरनित्यतानैयत्यस्यान्यत्र त्वदुक्तत्वात्, इह च ज्ञानस्य नित्यात्मधर्मतया नित्यस्यैव सङ्कोचविकासाङ्गीकारो विरुद्धइति—तद प्युन्मादविलसितम् । अवयवोपचयापचययोरेवानित्यताव्याप्यतया पर्यायात्मक तया च तत्परिभाषितयोस्तत्राभिहिततया प्रसरणाऽप्रसरणयो. ज्ञाननिष्ठयोःकर्म कृतयो मङ्कोचाविकासयोरधिकानधिक विषयत्वरूपयोरनित्यताऽव्याप्यतया तयोरत्यन्तविलक्षणत्वात् । ज्ञान हि नाम निरवयवं द्रव्यम् । नहि तस्य सङ्कोचविकासाववयवोपचयाऽपचयात्मकौ सम्भवतः । अपि तर्हि दीपप्रभायाइव विषयव्यापनाव्यापनरूपौ । ज्ञानस्य प्रसरण स्वाभाविकम्, सङ्कोचस्त्वौपाधिक । सच बह्वल्पविषयकत्वरूपः । उपाधिस्तु प्राचीनं कर्मैव—

अज्ञानेनावृत ज्ञान तेन मुह्यन्ति जन्तव. ।

इति स्मरणात् । अज्ञानन्नामाविद्यामायापरनामक प्राचीन कर्मैव—

अविद्या कर्मसञ्ज्ञाऽन्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिःसा वेष्टिना नृपसर्वगा ॥
ससारतापानखिलानवाप्नोत्यतिसन्ततान् ।
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसञ्ज्ञिता ॥
सर्वभूतेषु भूपाल तारतम्येन वर्तते ।

इति विष्णुपुराणोक्तं । 'माययाऽपहृतज्ञानाः' इत्यत्र मायाशब्दोऽप्येतदर्थएव 'मायाचाविद्याचाविर्भाव इति तत्रैव भाष्ये व्यक्तम् ॥

एतदुक्तं भवति—जीवस्तावदणु.—

वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवस्स विज्ञेयः सचानन्त्याय कल्पते ॥

'आराग्रमात्रोह्यवरोहि दृष्टः' इति श्रुतेः । तच्चाणुत्वं स्वाभाविकम् ; उपाध्य-

नुक्तेः 'एषोऽणुरात्मा चेतसा वेदितव्यः' इति मुमुक्षूपास्यत्वश्रवणात् । नह्यौपाधिकाकारमूलकशोकमोहादिमान्मुमुक्ष्वनुसन्धेयः । 'तेन प्रद्योतेनैषआत्मा निष्क्रामति' इति केवलस्यात्मनो भूतसूक्ष्माणामिव निष्क्रमण श्रूयते । न च विभोर्निष्कमण सम्भवति । तदाह सूत्रकारः 'उत्क्रान्तिगत्यागतीनाम्' इति । श्रुतिश्च 'तमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति । एवमणोर्जीवस्य, आलोकादिर्दीपस्येव सर्वदेहव्यापिसुखाद्युपलब्धिहेतुस्तदन्यस्तत्स्वाभाविको धर्म. कश्चिद्ज्ञानाख्यः श्रुतिसिद्धोऽवश्यमङ्गीकर्तव्य. । सच नित्य नित्यात्मस्वाभाविकधर्मत्वात् । 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' 'अविनाशीवाऽरेऽयमात्माऽनुच्छित्तिधर्मा'—

यथा न क्रियते ज्योत्स्ना मलप्रक्षाळनान्मणे· ।
दोषप्रहाणा न्नज्ञानमात्मन.क्रियते तथा ॥
यथोपादानकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतःसम्भवः कुतः ॥
तथा हेयगुणध्वसादवबोधादयो गुणा. ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनोहिते ॥

इत्यादिभ्यः । तच्चात्मवदणुतद्गुणस्तदपृथक्देशश्च यदि स्यात्, तदा तत्कल्पना वयर्थ्यमेव स्यात् । तेन विनापि यावद्देहव्यापिसुखाद्युपलब्ध्यापत्तिश्च स्यात् । अतो विभुतादित्यास्थेयम् । तथा च श्रुतिस्मृती 'सचानन्त्याय कल्पते' इति—

ज्ञानेन च तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवद्ज्ञान प्रकाशयति तत्परम् ॥

इति च । आदित्यवत्प्रकाशयतीत्यनेनेद सूचितम्; यथा दिक् चक्रवालव्याप्तस्यापि रविप्रकाशस्य मेघराहुग्रहादिभिरात्यान्तिकानात्यान्तिकसङ्कोच., तथा स्वतो विसृमरस्यापि धर्मभूतज्ञानस्य कर्मणाऽऽत्यन्तिकानात्यन्तिकसङ्कोचः, प्रतिबन्धव्यावृत्तौ प्रसरणचाविरुद्धमिति । प्रकाशयतीत्यनेन विषयाप्रकाशनमेव सङ्कोचः नत्ववयवापचय इति दर्शितम् ॥

एतेन 'सचानन्त्याय कल्पते' इति श्रुतिः न ज्ञानविकासपरा किंतूपाधिना परिच्छिन्नस्य तत्यागादपरिच्छिन्नत्वापत्तिरिति जीवानन्त्यपरापि सम्भव-

र्तानि शङ्का परास्ता । ज्ञानानन्त्यपर निरुक्तगीतादिवचनविरोधात् ; अणुत्वस्या-नौपाधिकताया उपपादितत्वाच्च । स इति प्रकृताणुत्वविशिष्ट परामृश्य तद्गत-तया विधीयमानस्यानन्त्यस्य स्वरूपानन्त्यपरत्वायोगाच्च । वस्तुमात्रपरामर्शित्वं तस्य न स्वरसम नहि घटे प्रस्तुते स इति मृन्मात्र परामृश्यते ॥

ननु 'यो बाल· स युवत्वाय कल्पते' इत्यादाविव विरोधिधर्मान्तरश्र-वणे वस्तुमात्रपरत्वमपि युक्तमिति चेत्–न । युक्ता तत्र बालत्वयुवत्वयोः शरीर-गतावस्थात्वेन प्रतिपन्नयोरनन्यथासिद्धेनावस्थान्तरेण बाधात्तच्छब्दस्य वस्तुमा त्रपरता ; इह तूदाहृतोपबृंहणप्रतिपन्नज्ञानानन्त्येनाऽनन्यथासिद्धेनौपसहारिका-नन्त्येन उपक्रमिकविशिष्टपरत्यागो नोचित । स्वरूपानन्त्य च दुर्निरूपम्, तथा हि पूर्वनणोर्जीवस्यानन्त्यापत्तिर्हि, अनन्तेन ब्रह्मणैक्यापत्तिर्वा, स्वरूपशैथिल्येन मृत्पिण्डस्येव प्रसर्पण वा, पटवद्वेष्टितस्य स्वरूपस्य प्रसारण वा । नाद्य· अशा-ब्दत्वात ; नहि 'देवत्वाय कल्पते, अरोगत्वाय कल्पते' इत्युक्ते, देवैरन्यैरैक्यं वा, स्वेतरानिरामयपुरुषान्तरैक्य वा सिध्येत् । अपितु स्वस्य देवत्वादिजाति योगः, आरोग्यादिगुणयोगो वा । एवमानन्त्यशब्दोऽपि प्रकृत्यर्थभूतविशेषणा-न्वयं धर्मिणोऽवगमयति, नतु वस्त्वन्तरम् तेनैक्यापात्ति भेदनिवृत्ति वा, प्रकृ त्यशस्य प्रत्ययांशस्य वा, तद्वाचित्वाभावात । 'सयुक्तमेतक्षरमक्षर च' नित्यो नित्यानाम्' इत्यादि नित्यत्वाक्षरत्वश्रुतिविरोधात् । स्वरूपशैथिल्येन प्रसर्पण-मप्यनुपपन्नम ; आत्मन्युपचयापचयविरहस्य प्रामाणिकत्वात् । स्वरूपवृद्धिरप्य नुपपन्ना, वेष्टितस्य प्रसारणमपि नाशङ्कनीयम्, एकस्मिन्नेव शरीरे कृत्स्नस्य ब्रह्मणो वेष्टितत्वेन शरीरान्तरस्य जीवशून्यत्वप्रसङ्गात । ब्रह्मणएवह्युपाधिना जीवभावोऽभ्युपगम्यते । जीवबहुत्वमिच्छतामश्रुतवेष्टनकल्पने गौरवं च अतः स्वाभाविकाणुत्ववतो जीवस्य ज्ञानद्वारकमेव परिच्छिन्नत्वमपरिच्छिन्नत्व चा श्रयणीयमित्यानन्त्य ज्ञानवैपुल्यमेव । तथा च श्रुत्यन्तरम् ; 'सर्वह पश्यःप-श्यति' इति ॥

इयांस्तु विशेष·–आदित्यादे· प्रसृमरप्रकाशस्य कादाचित्कस्सङ्कोचः । जीवस्यौत्पत्तिको मण्यादेरिव प्रकाशसङ्कोच कर्मकृतः, शाणादिनेव ब्रह्मज्ञा-नेन च तन्निवृत्तिः पुनरप्रतिबन्ध अपुनरावृत्तिवचनात् । अतोऽणोर्नित्यस्य स्वाभाविकधर्मतया नित्यमेव ज्ञानमनादिकर्मणा विषयावच्छेदरूपसङ्कोचवदपि

नानित्यं भवितुमर्हति। किच अपरिच्छिन्नस्यैवात्मन· अन्त.करणाद्युपाधिपरिच्छेदात्परिच्छिन्नस्य जीवभावस्त्वयेष्यते। तत्र कुतो नानित्यताप्रसङ्ग परिच्छेदो हि सङ्कोच एव। यद्युच्येत प्राग्विकसितस्यैकदेशावच्छेदएवानित्यतागमकः ब्रह्मणस्त्वनाद्याविद्यान्त करणादिकृतोऽवच्छेदोऽनादिरिति नानित्यताप्रसङ्ग इति कुतस्तर्ह्यनादिकर्मसङ्कुचितस्य धर्मभूतज्ञानस्यानित्यतामापादयितुं प्रयत्न· अतस्तदिदमुन्मादविलसितमेव ॥

एतच्च स्वतो विकासशक्तियुक्तस्य धर्मभूतज्ञानस्य विकासप्रतिबन्धकं कर्माभ्युपगम्यते, नतु विकसितस्यैकदेशावच्छेदकमिति—श्रुतप्रकाशिका ग्रन्थ स्वारस्यादवगम्यते ॥

जैनैस्तु गजादिशरीरे विकसितस्यात्मनः अत्यल्पपिपीलिकादिशरीर प्रविशतोऽवच्छेदस्स्वीकृत इत्यनित्यत्वमापादितमिति वैषम्यं प्रसिद्धम। उन्मत्तेन तु त्वया न ज्ञातमिति, एतद्विज्ञातमेव बुद्धिमताम् ॥

ननु नित्यत्व सङ्कोचविकासौ चेत्युभयमिदं विप्रतिषिद्धमिति चेत् न उभयोरपि श्रुतत्वात्, नहि श्रुतेऽनुपपन्नं नाम। यथाह सूत्रकार· 'श्रुतेस्तु शब्द मूलत्वात्' इति। द्रव्यमात्रस्य स्वरूपतो नित्यत्वमवस्थारूपं च विकारं प्रत्यक्षेण पश्यतश्शङ्कानुत्थानाच्च ॥

नन्वेव नित्यानित्यविभागोच्छेदःस्यादिति चेन्न—स्वरूपान्यथाभाववदनित्य, तद्रहित नित्यमिति व्यवस्थोपपत्ते.। यदाहुर्महर्षयः—

यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै।
परिणामादिसम्भूतां तद्वस्तु नृपतच्च किम् ॥ इति
आविर्भावतिरोभाव जन्मनाश विकल्पवत्।

इति च। अचिद्वस्तु च तथेत्यनित्यमित्युच्यते चिद्वस्त्वतथाभूतमिति नित्यमित्युच्यते ॥

नन्ववस्थान्तरापत्तिरेव कार्यत्वं तथा च नित्यं च भवति कार्यंचेति विप्रतिषिद्धमिति चेत्—नैतद्विप्रतिषिद्धम्। स्वरूपेण नित्यस्यापि द्रव्यस्य घटत्वाद्यवस्थाविशिष्टवेषेणानित्यताया· प्रत्यक्षेणोपलभ्यमानत्वात्। नहि दृष्टेऽनुपपन्न नाम दर्शनानुगुण्येन वस्तुसर्व व्यवस्थाप्यम् ॥

यत्तु एवमवस्थाया अनित्यत्वे यदि तदवस्थं द्रव्यमप्यनित्यम् गतं ज्ञाननित्यत्वेन ; यदि तु तस्या अनित्यत्वेऽपि तद्वद्द्रव्य नित्यमेव जितं जैनेन । आत्मनः पर्यायशब्दिनावस्थावत्त्वेऽपि नित्यत्वोपपत्तेरिति दूषणम्—तदप्युन्मादविलसितमेव । नहि यादृशमात्मनो नित्यत्व तादृश नित्यत्व तज्ज्ञानस्याप्यभ्युपगच्छाम. : करणव्यापारवैयर्थ्यप्रसङ्गात् । किंतु तार्किकाद्यभिमत ज्ञानस्यागन्तुकधर्मत्वं निराकर्तुं, सत्कार्यवादमुज्जीवयितु मृदादेरिव स्वरूपतो नित्यत्वं आगन्तुकावस्थाश्रयत्वं च । तेन रूपेणानित्यत्वं तु घटत्वाद्यवस्थाविशिष्टवेषेण मृदादेरिवेष्टमेव । तदेव च प्रसरणाप्रसरणशालित्वमादायोदयास्तमयादिव्यवहारः करणव्यापारार्थवत्त्व च । तथा च सौदर्शनान्यक्षराणि ' ज्ञानं हि द्रव्यं तस्य स्वरूपातिरेकेण सङ्कोचविकासाख्यमवस्थाद्वयमभ्युपेतम । अतस्तिरोधान–कर्मणा तत्सङ्कोच । तन्निवृत्तिस्तु प्रसर । स एव च विकासः । सचानित्य तस्यानित्यत्वेऽपि नित्यस्य ज्ञानद्रव्यस्य स्वप्रकाशत्ववादः स्वप्रकाशरूपप्रसरणार्हत्वनिबन्धनः । अतोऽवस्थाद्वयस्यागमापायित्वेऽपि द्रव्य नित्यमेवेति । मृद्द्रव्यस्य स्थिरत्वेऽपि घटत्वाद्यवस्थस्य तस्यानित्यत्ववत्, ज्ञानाख्य द्रव्यस्य नित्यत्वेऽपि स्मृतित्वानुभूतित्वाद्यवस्थज्ञानानित्यत्व युक्तमिति ' ॥

अतएवात्मनः उदयास्तमयनिषेध ' न जायते म्रियते वा विपश्चित् ' इत्यादिषु श्रूयते । नैवं ज्ञानस्योदयास्तमयौ निषिध्येते कस्यांचिदपि श्रुतौ । ' न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ' इति तु स्वरूपनित्यत्वमात्राभिप्रायकम् अन्यथा सर्वलोकसिद्धोदयास्तमयादिव्यवहारविलोपप्रसङ्गात् करणव्यापारवैयर्थ्यप्रसङ्गाच्च । तथा च श्रीभाष्यम्—' तमिममिन्द्रियद्वारा प्रसरणादिकमाश्रित्योदयास्तमयादि व्यवहार ' इति ॥

यद्येव धर्मभूतज्ञानकल्पनैव व्यर्थाः धर्मिणएव जीवस्य कर्मकृत सङ्कोचविकासकल्पनोपपत्तेः । स्मर्यतेहि जीवस्वरूपस्यैव कर्मणा सङ्कोचः—

यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृपसर्वगा ।

इति कर्मविनिर्मुक्तस्य तस्यैवानन्त्यमपि च स्यात् । निरवयवत्वादात्मनस्तदनङ्गीकारे च तथैव निरवयवस्य तद्धर्मभूतज्ञानस्यापि तन्नस्यात् । बद्धमुक्तदशाभेदेनाणुत्वविभुत्वे धर्मभूतज्ञाने त्वयापि वाच्ये ; तेच क्लृप्त आत्मन्येव स्ताम्

तथा च जितं जैनैरिति । न स्यात्–जीवस्य निर्विकारस्य सङ्कोचविकासयोरसम्भवात् । आत्मनोहि निर्विकारत्वं प्रमाणप्रतिपन्नम् । नह्येवं ज्ञानस्य निर्विकारत्वं कचिदपि श्रुत, प्रत्युत सङ्कोचविकासबोधकश्रुतिपुराणेतिहासादिवचनान्येव भूयांस्युपलभ्यन्ते । अत आत्मतिरोधानवचनं घनपटलेन तिरोहितो घर्मरश्मिरितिवत् धर्मभूतप्रकाशद्वाराह्युपपद्यते । अतएवानन्त्यवचनमपि तत्परमित्यवोचाम ॥

ननु ज्ञानस्येव सङ्कोचविकासौ जीवस्यापि श्रूयेते—'यदेकां शाखां जीवो जहात्यथ सा शुष्यति सर्व जहाति सर्व शुष्यति' इत्यादौ । अतः श्रुतानुगुण्याज्जीवस्यैव तौ किं न स्याताम् ? मैवम्–निरवयवत्वनिर्विकारत्वादि बहु श्रुतिविरोधेन तस्याः श्रुतेर्जीवसङ्कोचपरत्वायोगेन तच्छाखासु भोगाश्रयत्वोपपादक पुण्यपापोपरतिमात्रपरत्वात् । अतएव विभुत्ववादिनापि–

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि सयाति नवानि देही ॥

इत्यादौ न स्वरूपव्यापिनो जीवस्य परिग्रह, नापि स्वरूपेण तद्विमोचनम्, अपितु जीवभोगसाधनत्वोपपादकपुण्यपापपरिग्रहः, तत्परित्यागश्चाभिमतः । क्षेत्रत्यागपरिग्रहयोस्तथात्व हि लोकसिद्धम् । एवं देहादावपि जीवस्याभिधीयमानौ स्वीकारप्रहाणौ कर्माधीनाभिमानविशेषतत्परित्यागावेवेति न तावता जीवसङ्कोचकल्पनाप्रसङ्गः । सौभर्यादिष्वनेकशरीरपरिग्रहोऽपि ज्ञानव्याप्त्यैवोपपद्यत इति । तपोविशेषमहिमप्रसादितभगवदनुग्रहायत्त ज्ञानप्रसरणादेव सर्वमुपपन्नमिति । स्वरूपातिरिक्त तत्सङ्कोचविकासौ च प्रमाणायत्तौ दुरपह्नवाविति न किंचिदनुपपन्नम् ॥

एवं च 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशीवाऽरेऽयमात्माऽनुच्छित्तिधर्मा' 'अवबोधादयो गुणा'–

प्रकाश्यन्ते न जन्यन्ते नित्याएवात्मनोहिते ।

'गुणाद्वाऽऽलोकवत्' 'प्रदीपवदावेश' इत्यादिश्रुतिस्मृतिसूत्रै. जीवस्वरूपातिरिक्त धर्मभूतं ज्ञान स्वरूपतो नित्यमित्यङ्गीकार्यम् । 'अनीशया शोचति मुह्यमानः' 'अज्ञानेनावृत ज्ञानं' 'माययाऽपहृतज्ञाना.' 'अविद्या कर्मसंज्ञा'

तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।

'पराभिध्यानात्तु तिरोहितं' 'सर्वं ह पश्य पश्यति सचानन्त्याय कल्पते'

'ज्ञानेनतु तदज्ञानं येषां नाशितमात्मनाम् ।

तेषामादित्यवज्ज्ञानं प्रकाशयति' 'सम्पद्याविर्भावः' इत्यादिभिः तस्य कर्मणा सङ्कोचः, तन्निवृत्त्या विकासश्च स्वीकर्तव्यौ । नैव जीवस्य सङ्कोचविकासौ कचिद्दृष्टौ । नवा नित्यनिर्विकारस्य तावुपपद्येते । नह्यनुपपन्नं प्रमाणविरुद्धं वा श्रुतितात्पर्यविषय इति कल्पयितुं शक्यते । अतो जीवस्य सङ्कोचविकासौ तदनित्यत्वप्रसङ्गादयुक्तौ । ज्ञानसङ्कोचविकासौ प्रामाणिकत्वात्, तद्रूपेणानित्यत्वस्येष्टत्वाच्च नानुपपन्नाविति तत्र विरोधोद्भावनमुन्मादविलसितमेवेतिदिक् ॥

एतेन अवस्थागतमनित्यत्वं तद्वत्यारोप्य व्यवहृतमिति अविरोधमाशङ्क्य-तथासति सङ्कोचविकासावस्थयोरेवानित्यत्वात, शरीरपरिणामस्यात्मनोऽनित्यत्वाभावादार्हतमतमाचन्द्रतारकं प्रतिष्ठितं स्यात् इति दूषितं—तत् अनभिमतदूषणरूपत्वादुन्मादविलसितं निरस्तम् । नित्यनिर्विकारस्य जीवस्य स्वरूपावस्थाशून्यस्य सङ्कोचविकासयोरयोगेन ज्ञाने तत्सद्भावेन तदवस्थावैशिष्ट्येनानित्यताया इष्टत्वेन च वैलक्षण्यात् ॥

अस्तु वा अवस्थामात्रस्यैवानित्यत्वम् । किं तेनस्यात् आर्हतमतोज्जीवनमिति चेत्, मूर्ख प्रलपितमेतत, स्वरूपस्य निर्विषयत्वात् तस्मिन्नधिकविषयकत्वन्यूनविषयकत्वरूपप्रसरणासम्भवेन मृदादिवदवयवोपचयापचययोरेव वक्तव्यतया तयोरनित्यत्वापादकतया तद्वतो जीवस्यानित्यत्वावश्यम्भावात् ॥

किंचास्मत्पक्षे जैनैरिव त्वयापि शरीरपरिमाणं जीवमभ्युपगम्य तस्यैवसङ्कोचविकासावभ्युपेत्य स्वमतं निर्वोढुं शक्यम् । तदपहाय भिन्नत्वाभिन्नत्वादिविकल्पासहं दोषशतसकुलं जीवभिन्नं ज्ञानमभ्युपगम्य तस्य सङ्कोचविकासावाश्रित्य तदेकात्म्यनिर्वहणं द्राविडप्राणायाममनुकरोतीति दूषणमप्युन्मादविलसितत्वादुपेक्षणीयम् । जीवसङ्कोचविकासासम्भव तदप्रामाणिकत्वयोरुपपादितत्वात् । धर्मभूतज्ञानावश्यम्भाव तत्प्रामाणिकत्व तत्सङ्कोचविकासप्रामाणिकत्वानामुपपादितत्वात् । तथाऽपि तन्नित्यताया उपपादनाच्च ॥

यदपि—अवस्थायाश्चाभेदो वा. भेदोवा । भेदाभेदौ वा नाद्य अवस्थावतोऽप्यनित्यत्वप्रसङ्गात् । नान्त्य. भेदाभेदयोरेकस्मिन्नयोगात् । अन्यथा जैनाभिमतसप्तभङ्गीस्वीकारापत्ते. । न मध्यम आत्मकार्त्स्न्यानिर्वाहात् । नहि ज्ञानादन्येन सङ्कोचेन विकासेनवा ज्ञानस्य कार्त्स्न्यं भवति अतिप्रसङ्गात् । किंचाणोर्जीवस्य कार्त्स्न्यदोषे प्राप्ते तद्भिन्नं तद्धर्मभूतं ज्ञानं तस्यापि कार्त्स्न्ये तद्भिन्नधर्मान्तर कथमिच्छसि ? किंच सङ्कोचविकासावस्थयोर्ज्ञानभिन्नयोरनित्यत्वात् अनित्यत्वेचानात्मत्वात् आत्माऽकार्त्स्न्यदोषस्तदवस्थः । तस्मादवस्थैवानित्या नतु तद्वानिति कल्पनमसारमिति—तदप्युन्मादविलसितमेव । अवस्थातद्वतोरभेदे कार्यत्वानिर्वाहेण तदभेदशङ्कानुत्थानात् । द्रव्य हि नित्यम्, आकृतिरनित्येति हिमध्यस्था. । आकृतिरेवचावस्था । नच पृथुबुध्नोदराद्याकृतिर्मृदेव केवलायां मृदि घटादिव्यवहाराभावात् । भेदाभेदयोरनङ्गीकारादेव न तत्पक्षोक्तदूषणावकाशः ॥

यत्त्वेतत्पक्षे आत्मकार्त्स्न्यानिर्वाहो दोषउक्त.: सोऽप्युन्मादविलसितएव । अणोर्जीवस्य कार्त्स्न्याकार्त्स्न्यशङ्कायाएवानुत्थानात् । सर्वदेहस्थसुखाद्यनुभवनिर्वाहाय धर्मभूतं ज्ञान श्रुतिसिद्धमभ्युपगम्यते । तस्य च कर्मणा सङ्कोचः तन्निवृत्त्या विकासश्च, तथैव श्रुत्यादिसिद्धोऽभ्युपगम्यते । नच ज्ञानस्याकार्त्स्न्यं शङ्कार्हम् । तस्य विभुत्वात्, कर्मणा तत्सङ्कोचेऽपि कृत्स्नशरीरव्याप्तेरव्यतिरेकात् आत्मातिरिक्त ज्ञान प्रकाशरूपमनङ्गीकुर्वतो जैनस्य मतेऽपि पिपीलिकापरिमाणशरीरस्यात्मनो हस्तिशरीरप्रवेशेह्यपरिपूर्णत्वरूपमकार्त्स्न्य दोषतयोपन्यस्तम् । दीपादित्यादेरिव प्रभाद्वारा, ज्ञानद्वारा सर्वशरीर व्याप्नुवत आत्मनोऽस्मिन्मते कुतोऽकार्त्स्न्य ? कुतोवा तत्परिहार. ? कुतो वा ज्ञानगतसङ्कोचविकासादिना तदुपपादनानुपपादने, कुतस्तरां तयोरनित्यत्वादनात्मत्वादात्माऽकार्त्स्न्ये ? तदिदं सर्वमुन्मादविलसितमेवेति यत्किञ्चिदेतत् ॥

इदतु तत्त्वम्—द्रव्यंहि सर्वं नित्यम् । तथाऽपि चितो द्रव्यस्य स्वाभाविक्यौपाधिकीचेत्यवस्था द्विधा । तत्रापि चितो जीवस्याणुत्वावस्था स्वाभाविकी ब्रह्मणस्तु महत्त्वावस्था स्वाभाविकी अणुत्वावस्थातु हृदयाद्युपाधिकृतत्वात् अस्वाभाविक्येव । जीवधर्मज्ञानस्य विभुत्वावस्था स्वाभाविकी । तारतम्यावस्थातु पुण्यापुण्यरूपप्राचीनकर्मकृतत्वादौपाधिक्येव । एवं परमात्मधर्म-

स्यान्तर्यामित्वस्य चिदचिन्निरूपितत्वावस्था स्वाभाविकी । स्थूलचिदचिन्नि रूपितत्वसूक्ष्मचिदचिन्निरूपितत्वावस्थातु तत्तद्वस्तुगतस्थूलसूक्ष्मावस्थात्मको- पाधिकृतत्वादौपाधिकी । तत्रौपाधिक्य. सर्वा अवस्था अनित्याः . स्वाभावि- क्यस्तु नित्या । अचितस्तु स्वरूपपरिणामिन. सर्वा अप्यवस्था औपाधिक्य., अतएवानित्या । तत्तद्वैशिष्ट्यात्तदवस्थं द्रव्यमनित्यमित्युच्यते । स्वरूपेणतु नित्यमेव 'अजामेकाम्' इतिश्रुतेः । तदेव सततपरिणामितया नामान्तरभ- जनार्हावस्थान्तरवत्तया नास्तीतिव्यवहारार्हमचिद्द्रव्यमनित्यमित्युच्यते । चिद्द्र- व्यन्तु स्वतस्सतैकरूपतयाऽस्तीति व्यवहारार्हत्वान्नित्यमित्युच्यते । तस्य यद्यपि स्वरूपगताऽऽगन्तुक्यवस्था नास्ति , तथाऽपि स्वासाधारणधर्मभूतज्ञानान्तर्या- मित्वगतां प्रसरणस्थूलावस्थ तत्तद्वस्तु निरूपितत्वरूपामागन्तुकीमवस्थां स्वापृ थक्सिद्धधर्मगततया स्वगतामालोच्य तस्योपादेयता प्रागुपपादिता ॥

यद्वा चिदंशस्य कर्मविशेषफलभोक्तृत्वाय तदनुरूपज्ञानविकासरूपविका- रो भवति नियन्त्रंशे तदवस्थ तदुभयविशिष्टतारूपविकारो भवतीति भाष्यदर्श- नात्, विकसितज्ञानवत्ताचिदंश आगन्तुक्यवस्था , तथाविधतदुभयविशिष्टतैव परमात्मन्यागन्तुक्यवस्था । माचानित्या । अतस्तत्प्रयुक्ता कार्यता साक्षादेवास्तु नचैवं तयोर्द्वयोरनित्यत्वप्रसङ्गइति शङ्क्यम् । नित्यभेदनित्यत्वात्यन्ताभावयो- र्नित्यत्ववतोस्तयोरप्यसम्भवात् । वस्तुमात्रेऽपि स्वरूपतो नित्येऽसम्भवाच्च । कार्यत्वापादनेत्विष्टापत्ते नित्यानित्यविभाग' स्वरूपद्वारकत्वस्वभावद्वारकत्वा भ्यां व्यवस्थितइति न कश्चिद्दोषः ॥

यदपि सङ्कोचविकासाववयवविनाशोत्पत्तिरूपौ । तत.कथ सङ्कोचा- दिधर्मकस्यानित्यत्व न स्यादिति—तदप्युन्मादविलसितमेव । ज्ञानस्य निर- वयवद्रव्यताया सङ्कोचविकासवत्तायाश्च प्रमाणप्रतिपन्नतया 'पुंसोऽनंशापि बुद्धिर्बहुविधविकृतिस्स्वीकृता इत्याचार्यैरप्युक्ततया अवयविद्रव्यगतसङ्कोचवि- कासावस्थयोरवानित्यतागमकतां च वदता ज्ञाननित्यत्वोपपदनात् । निरवयवे सङ्कोचविकासावित्र कल्पयितु न शक्याविति चेत्—सत्यम्—कल्पनायां किल शक्त्यशक्ती , वयन्तु श्रुतत्वादङ्गीकुर्म इत्युक्तम् ॥

वस्तुतः—विषयसंयोगरूपो विकासस्तदल्पत्वाधिक्याभ्यां भवति तारत- म्यभागिति—

सर्वभूतेषु भूपाल तारतम्येन वर्तते ।

इत्युक्तम् । तथाविधश्चाल्पत्वं वस्तुसंयोगित्वरूपं तारतम्यं ; निरवयवत्वेन स्वाभिमतेष्वाकाशादिषु घटादिपरिच्छिन्नेषु तद्विनिर्मुक्तेषु च वैशेषिकादिभिरङ्गीकृतम् । अविद्याऽन्तःकरणाद्युपाधिपरिच्छिन्नत्वादनवयवस्य ब्रह्मणोऽङ्गीकुर्वत-स्तवाप्यभिमतम् । नास्मासु दोषतयाऽऽपादनीयम् इति तत्र तदापादनमुन्मादविलसितमेव । एवञ्चानवयवत्वेन सिद्धान्तसिद्धे तस्मिन् सावयवत्वं सिद्धवत्कृत्य घटावयवानामिव सङ्कोचप्रसरणवत्त्वमाशङ्क्य जलावयवेष्वपि विपुलघटवर्तिनायामसङ्कुचितत्वं सूक्ष्मघटप्रवेशे पुनः सङ्कुचितत्वं पुनर्विपुलघटप्रवेशे प्राग्वत्प्रसरणं च प्रसज्येतेति दूषणापादनमप्युन्मादविलसितमेवेति स्पष्टमेव ॥

किंच सावयवेष्वपि पटादिषु दृष्टावाकोचसङ्कोचौ घटादिषु कुतो न दृश्येते ? स्वभावविशेषादेवेतिचेदन्यत्रापि कुतो न तथा पश्यसि सावयवेष्वपि द्रव्येषु प्रभा घटादिषु निविडत्वानिविडत्वादिरूपो नान्यत्रापादयितुं शक्यः । जलावयवेष्वपि प्रसरणाप्रसरणे कुल्या केदारादिप्रदेशेषु प्रसिद्धे नापह्नोतुं शक्ये । ज्ञानेऽपि पुरुषभेदेन बह्वल्पविषयव्यापनं प्रत्यक्षत एवोपलभामहे । श्रुतिसिद्धौ कर्मकृतः सङ्कोचः तन्निवृत्त्या प्रकाशश्च नापह्नोतुं शक्यौ ॥

एवं च सङ्कोचो विकासश्च कस्य वस्तुनः स्वभावौ कस्य नेति विवेचनीयम् । यदि ज्ञानस्यैव दीपप्रभादृष्टान्तप्रदर्शनासाङ्गत्यं यदि प्रकाशमात्रस्य जीवब्रह्मणोरपि तत्प्रसङ्ग इति विकल्प्य दूषणमप्युन्मादविलसितम् । उन्मादशरणानां प्रत्यक्षाद्यवगतेष्विव श्रुत्यवगतेष्वपि तदवगमप्रमाणप्रतिपन्नानामपह्नोतुमशक्यत्वात्—

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।

इति महर्षयोऽप्यस्मार्षुः । नच निर्वचनासामर्थ्यात् वस्तुस्वभावविशेषापह्नवोऽतिप्रसङ्गात्, इक्षुक्षीररसादीनां माधुर्यतरतमभावः केनापि निर्वक्तुमशक्यः नैतावता तदपह्नवः मन्दमतेस्तव निर्वचनासामर्थ्येऽपि धर्मभूतप्रकाशत्वेनानुगतीकृतयोर्ज्ञानप्रभयोः सङ्कोचविकासकल्पनासम्भवाच्च । तथा च दुरत्नाचिरत्नप्रभादीनां घटपटमलादिप्रतिबद्धानां तदपगमादाविर्भाववदनादि कर्मसञ्चयसङ्कुचितस्यापि जीवधर्मभूतज्ञानस्य ब्रह्मध्यानेन तन्निवृत्तावाविर्भावः श्रुति

सिद्ध । सच स्वाभाविकावस्थाविशेषरूपत्वान्नानित्य इति तद्विशिष्ट ज्ञानमपि नित्यमेव। दीपप्रभादिषुच घटाद्यन्तःप्रवेशे सङ्कोचेन विकासोऽभिभूयते। शिथिलावयवेषु च घटादिषु सङ्कोचविकासौ पुरुषप्रयत्नसापेक्षौ दृश्येते। नच तौ विनाशोत्पत्तिरूपौ। अतो नैकान्त्येन सङ्कोचविकासावनित्यतागमकौ। कथं तर्हि जैनं प्रति सङ्कोचविकासाभ्यामात्मनोऽनित्यत्वमापादितमितिचेत्—इत्थं जैनेनहि शरीरात्म परिणामात्मवादिना न शिथिलावयवपटादिवत् परिवर्तनेन सङ्कोचः व्याकोचेन च विकासोऽङ्गीक्रियते। नवा निरवयवस्य तथात्व सम्भवति। अतो वृद्धिह्रासावेव वक्तव्यौ। ते च वृक्षादाववयवोपचयापचयरूपौ दृष्टौ। तौच तदवस्थद्रव्योत्पत्तिविनाशरूपौ। अतस्तथाविधस्यात्मनोऽनित्यत्व दुर्वारमिति। प्रभाया विशीर्णावयवरूपत्व प्रतिक्षणमागन्तुकानेकावयवोपनिपातकल्पनंचेत्यादिकं श्रुतप्रकाशिकायामेव बहुधा दूषितमिति नात्र यत्न.क्रियते अतोऽल्पानल्पविषयसंयोगरूपौ सङ्कोचविकासौ ज्ञानगतौ श्रुतिस्मृतिसूत्रपुराणाद्यवगतौ दुरपह्नवौ। तौच नावयवोपचयापचयरूपाविति नानित्यतागमकाविति तस्याप्रामाणिकतां वदन पशुप्राणवियोजनफलकतया हिंसात्वादग्नीषोमीयापशुसंज्ञपनमपि 'न हिंस्यात' इति निषेधविषयइति वदतो बौद्धस्येव धर्मभूतज्ञानविद्वेषिणः प्रच्छन्नबौद्धस्याप्यज्ञानैकपक्षपातिनः कस्यचिदत्र विरोधोद्भावनमुन्मादविलसितमनुपादेयमित्युपरम्यते ॥

ब्रह्माप्यज्ञ जल्पतोऽप्यल्पबुद्धे
धर्मज्ञानद्वेषिणो दूषकस्य।
आम्नायाम्नातेषु नस्याद्विकास
सङ्कोचो वा नास्ति चेत्किन्नु चित्रम् ॥

इति श्रीशैलकुलतिलक सर्वतन्त्रस्वतन्त्र श्रीनिवासार्य तनूजनुषा
लक्ष्माम्बागर्भशुक्ति मुक्ताफलवपुषा कौण्डिन्य
श्रीनिवासदीक्षितकटाक्षवीक्षासलब्ध

मीमांसाद्वन्द्व निर्द्वन्द्वमनितिभवपुषा
अग्रजाचार्यदीक्षित परिचर्यासमासादित
चतुस्तन्त्री तन्त्री विनोदजुषा
श्रीनिवास विदुषा
विरचिते

## विरोध निरोधे—द्वितीयो निरोधः

## अथ तृतीयो निरोधः

स्वभावस्यान्यथाभावात् स्वरूपस्यान्यथात्वतः ।
यत्कार्य चिदचिद्वस्तु तस्मै भगवते नमः ॥

ननु जीवस्तावन्नित्यनिर्विकार. सर्ववेदान्तप्रसिद्धः सर्वाभ्युपगतश्च। अत एव तस्योत्पत्तिविनाशौ प्रतिषिध्येते 'न जायते म्रियते वा विपश्चित्' इति 'अविनाशीवाऽरेऽयमात्मा' इतिच । नित्यत्वं च श्रूयते 'नित्यो नित्यानाम्' इति । स्मर्यतेच 'अजो नित्यः शाश्वतोऽय पुराण.' इति । तत्कथं तस्य कार्यत्वमुच्यते–इत्थमुच्यते—यथा नित्यत्वादिश्रूयते तथोत्पत्तिरपि श्रूयते 'प्रजापति. प्रजा असृजत' सन्मूलाः सौम्येमा. प्रजाः' इति। 'सर्व खल्विद ब्रह्म तज्जलानिति' इति । इदगॅसर्वमसृजत' इत्यारभ्य 'विज्ञानंचाविज्ञानं च' इति। नचान्यतरदप्रमाणम्। तुल्यंहि साम्प्रदायिकत्वम्। नचैकं वस्तु द्विरूपम्। नच वस्तुनि ग्रहणाग्रहणवद्विकल्प.कल्प्यते । तत्र विधिनिषेधयोर्व्यवस्थैव वाच्या तत्र निषेधावियदादिवज्जीवस्वरूपोत्पत्ति प्रतिषेधन्ति । उत्पत्तिविधयस्तु स्वासाधारणधर्मभूतज्ञानविशिष्टवेषेणोत्पत्ति वदन्ति । सिद्धस्यापिहि वस्तुनो धर्मान्तरविशिष्टवेषेण साध्यता व्रीह्यादौ दृष्टा । यथा—'व्रीहीनवहन्ति' 'व्रीहीन् प्रोक्षति' इत्यादौ तत्रहि सिद्धस्यहि व्रीह्यादेः दृष्टादृष्टविशेषविशिष्ट वेषेणावहननादिसाध्यता तान्त्रिकसिद्धान्तासिद्धा । तद्वत्प्रसिद्धस्यापि जीवस्य

ज्ञानविशेषविशिष्टवेषेणोत्पत्तिरविरुद्धा। ज्ञानंहि करणकलेबराद्यधीनप्रसरणम्। प्राक्सृष्टेस्तदभावात्तत्सृष्ट्यधीनं ज्ञानवैशिष्ट्यमिति भवति तद्रूपेणोत्पत्तिः। एतदेव दर्शयितुं 'विज्ञानंचाविज्ञानं च' इत्युक्तम्। 'एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति' इति प्राक्सृष्टेर्जीवानां निष्क्रियत्वोक्त्याचेदमेव दर्शितम्॥

ननु विषमोऽयं दृष्टान्तः। युक्ताहि प्रागवहननप्रोक्षणाभ्यां दृष्टादृष्टयोर्वैतुष्यापूर्वयोर्व्रीहिष्वनुत्पत्त्या ताभ्यां तदुत्पत्त्या च व्रीहीणान्तद्विशिष्टतारूपेण साध्यता। ज्ञानं तु जीवस्य नित्यस्य स्वाभाविकधर्मत्वात् नित्यम्, अभिमतं च तथैव। तथा च विशेषणविशेष्ययोर्द्वयोरपि प्राक्सतोः कथं विशिष्टवेषेणापि साध्यता? अतएव निष्क्रियत्वश्रुतिरपि न ज्ञानाभावपरा। नित्यस्वाभाविकधर्मत्वविरोधात्। अपितु तत्साध्यव्यापारविरहपरा। अतो न ज्ञानवैशिष्ट्येन कार्यतेतिचेत्—उच्यते—सत्यमस्ति ज्ञानम्। तथाऽपि तत्प्रसरणप्रयोजककरणकलेबराद्यभावादसत्कल्पम्। अतएव 'निष्क्रियाणाम्' इत्युच्यते अतएव 'ज्ञाज्ञौ द्वावजावीशनीशौ' इत्यसार्वज्ञत्वेन निर्दिश्यते। अत एव मण्यादिदृष्टान्तनिर्देशोऽपि घटते। नहि मण्यादेः प्रभा शाणनिघर्षणेन जायते पार्थिवमलादिप्रतिबद्धाऽभिव्यज्यते। अतः कुङ्कुमगन्धाभिव्यञ्जकगोघृतादेरिवासत्कल्पजीवज्ञानाभिव्यञ्जककरणकलेबरादिप्रदानेन तद्वैशिष्ट्याभिव्यञ्जकत्वादभिव्यक्तिमद्ज्ञानविशिष्टतया प्रागसत्या अवस्थया परमात्मायत्तत्वात् देवो जातः मनुष्यो जात इति शरीरद्वारेव 'अज्ञोऽयमभिज्ञो जातः' इति ज्ञानद्वाराऽप्युत्पत्तिव्यवहारस्य लोकेऽप्यनपायात्। धर्मसूत्रकारैश्च 'सहि विद्यातस्तं जनयति, तत् श्रेष्ठं जन्म। शरीरमेव मातापितरौ जनयतः' इति शरीरद्वारकाज्जन्मनो ज्ञानद्वारकस्यैव जन्मनः श्रेष्ठत्वाभिधानेन ज्ञानद्वारिकैव तत्तावस्थाविशेषवशादुत्पत्तिर्युक्तैव॥

इयांस्तु विशेषः—क्वचिद्विशेषणोत्पत्तिद्वारिका विशिष्टोत्पत्तिः। क्वचित्तु तत्तद्विशेषावस्थाद्वारिकोत्पत्तिरिति। नचैतावता तस्यौपचारिकत्वं, तुल्यरूपयोः प्रयोगप्रत्यययोः सत्वे क्वचिदौपचारिकत्वं क्वचिन्मुख्यत्वमिति वैषम्यहेत्वनुपन्यासात्। नहि यत् विशिष्टविषयकं तत् उभयान्वयिन्येव मुख्यं अन्यतरान्वयिन्यमुख्यमिति कश्चन व्युत्पत्तिसिद्धो नियमः। जातिविशिष्टशक्तिवा-

दिनामाकृतिविशिष्टशक्तिवादिनां द्रव्य हि नित्यमाकृतिरनित्येति वादिनां च घटो जातो घटो नष्ट इत्यादिसर्वव्यवहाराणाममुख्यत्वप्रसङ्गात् । कचिद्विशेषणे कचिद्विशेष्ये च तदन्वयवाधात् । विशेष्ये तदन्वयं मुख्यता. विशेषणे तदन्वयेत्वमुख्यतेत्यस्य परिभाषामात्ररूपत्वात् । पुत्रो जातो दुहिता जाता देवो जातो मनुष्यो जात इत्यादिसर्वव्यवहाराणाममुख्यतापातात् ॥

तान्त्रिका अपि यत्र विशेषणविशेष्ययोर्द्वयोरप्यप्राप्तयोर्विधिः, यत्र वा विशेषणमात्रे प्राप्तिर्विशेष्येचाप्राप्तिस्तत्रोभयत्रापि विशिष्टविधिमेव व्यवहरन्ति। पर्यवसानन्तु विशिष्टो जायतां मावा, व्यवहारस्तु मुख्यएव । अस्तिच व्यवहारवैषम्ये नानार्थादिष्विवोभयत्र मुख्यता दुर्वारा । अतो ज्ञानविकासावस्था वैशिष्ट्येन जीवस्योत्पत्तिरिति । अमुमर्थं वदन्त्यः ' प्रजापतिः प्रजा असृजत इत्यादिश्रुतय. प्रमाणम् । न जायते म्रियते वा ' इत्याद्यास्तु प्रागुक्तविधि निषेधप्रक्रियामनुरुध्य विहितव्यतिरिक्तविषयतया विश्राम्यन्त्यो वियदादिवत्स्वरूपोत्पत्ति प्रसक्तां प्रतिषेधन्तीति न किंचिदनुपपन्नम् ॥

यदत्र केनचिन्मूढजनमूर्धन्येन विरोधोद्भावनाय प्रलपितं, एव वदता जीवोत्पत्तिप्रतिषेधवादिन्यस्तन्नित्यत्ववादिन्यश्च तत्स्वरूपमात्रपरा इति तद्धर्मभूतज्ञानस्योत्पत्तिप्रतिषेधे नित्यत्वे वा प्रमाणभूताः श्रुतयो वेदान्तेषु न सन्तीत्युक्तं भवति । किंच प्रकृतैतावत्त्वं हि प्रतिषेधति ततोऽब्रवीति च भूय. ' इत्यत्र ' प्राणावैसत्य तेषामेषसत्यम् ' इति श्रुतिर्धर्मभूतज्ञानस्य नित्यत्वे बाधकप्रमाणमित्युक्तम् । तत्र हि प्राणा जीवा' सत्यं वियदादिवत्स्वरूपोत्पत्त्यभावात् तेषामप्येष परमात्मा सत्य., धर्मोत्पत्त्यभावात् इति व्याख्याताचेय श्रुति' । धर्मज्ञानस्य नित्यत्वे हि जीवपरमात्मनोर्द्वयोरपि स्वरूपोत्पत्ति धर्मोत्पत्तिलक्षण विकारद्वयशून्यत्वेन तौल्यात् ' प्राणावै सत्यं तेषामेष सत्यम् ' इति जीवपरयोर्वैलक्षण्यमभिदधाना श्रुतिरप्रमाणं स्यात् । इत्थं जीवधर्मज्ञानस्य नित्यत्वे साधकप्रमाणाभावं बाधकप्रमाणसद्भावंचोपवर्ण्य ' सम्पद्याविर्भावः स्वेनशब्दात् ' इत्यधिकरणे—

यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।

इत्यादि शौनकस्मृतेर्धर्मभूतज्ञाननित्यत्वे प्रामाण्यमुक्तम् । इत्थमत्र ज्ञाननित्यत्वे

साधकबाधकप्रमाणसद्भावासद्भावोक्त्या क्वचिदुक्त्या च पूर्वापरविरोध इति- तदप्युन्मादविलसितमेव ॥

जीवोत्पत्तिनिषेध तन्नित्यत्ववादिनीभि श्रुतिभिर्नित्यस्वाभाविकधर्मभूत- ज्ञानस्यापि नित्यत्वस्यैव समर्थनात्। चैतन्य हि तस्य स्वाभाविको धर्म' , चेतन इत्येव तद्व्यवहारात्। अत एवहि तस्याचिद्वैलक्षण्यम्। नह्यस्वाभाविको धर्मो वैलक्षण्यहेतु । उत्पत्तिनिषेधवादिन्यां नित्यत्ववादिन्यां च तद्धर्मो विप- श्चिच्चेतनशब्दाभ्यामेव निर्दिश्यते। असाधारण्येन हि व्यपदेश । सूत्रकारो- ऽपिहि 'तद्गुणसारत्वात्तद्व्यपदेश' ' इत्याह। अतस्तन्नित्यतासाधकस्य तस्यैव तत्साधकत्वाभावगमकताभिधानमुन्मत्तप्रलपितमेव ॥

किंच इदानीमेव ह्युक्त विशिष्टस्य विधिर्वा निषेधो वा विशेषणवि- शेष्योभयान्वयीति। विपश्चिच्चेतनशब्दौ च विशिष्टपरौ । अतो विशेष्यस्येव विशेषणस्यापि नित्यत्वं ततस्सिध्यत्येवेति कुतो वा तेन ज्ञानस्यानित्यत्वावगमः ॥

ननु नब्रूम· श्रुतिर्ज्ञानस्य नित्यत्वाभाव गमयति, इति किंतु तस्याजीवस्व- रूपमात्रपरत्वोक्त्या विशेषणांशे तात्पर्याभावोपपादनात् ज्ञाननित्यत्वमप्रामाणि कमिति गम्यत इति-मैवम्-ज्ञानस्य स्वरूपेण नित्यत्वेऽपि सङ्कोचविकासावस्था द्वयबोधक प्रागुदाहृत श्रुतिस्मृतिसूत्रस्वारस्यात् तन्निर्विकारत्वबोधकप्रमाणानु- पलम्भाच्च. तस्यावस्थान्तरापत्तिरूपकार्यत्वावश्यम्भावे स्वरूपान्यथाभावरूपो- त्पत्तिवियदादितौल्येन प्राप्तायास्तस्यानिषेधायोगात् जीवस्वरूपमात्राभिप्रायक- त्वमवश्यमाश्रयणीयम। अन्यथा तत्तिरोभावाविर्भावरूपबन्धमोक्षादिवादिन्यः श्रुतयो निर्विषया· स्यु . जीवोत्पत्तिवादिन्यश्च श्रुतयोऽप्यन्यथा व्याकुप्येयुः ज्ञानस्य स्वरूपेण नित्यतावादिन्यश्च श्रुतय. न विज्ञातुर्विज्ञातेर्विपरिलोपो वि- द्यते 'अविनाशीवाऽरेऽयमात्माऽनुच्छित्तिधर्मा' इत्याद्यास्सन्ति। एवं साध- कप्रमाणेषु जाग्रत्सूक्तप्रकारेणान्यथासिद्धा जीवमात्रपरत्वोक्ति. कथं ज्ञानस्य नित्यत्वे साधकप्रमाणाभाव साधयेत्। शौनकस्मृतिश्चोक्तार्थे विशदमुपपादि- काऽस्त्येव ॥

किंच 'आत्मन आकाशस्सम्भूतः, एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च, यतो वा इमानि भूतानि जायन्ते, तोयेन जीवान्व्यससर्ज भूम्याम्' इत्या

दिषु जीवोपकरणानां भूतभौतिकानामिव जीवानामप्युत्पत्तिः श्रूयते । नचैतद्चेतनाविशिष्टचेतनोत्पत्तिपरा। तोयेन जीवा निति केवलस्याप्युत्पत्तिवचनात्। 'इदग्ं सर्वमसृजत ' इति चेतनाचेतनयोरेकरूपेणोत्पत्तिरभिधीयते । ततो जीवस्यापि भूतभौतिकादेरिव स्वरूपान्यथाभावरूपोत्पत्तिरापाततोऽवगम्यते । सा तावत्प्रतिषेध्या तेनच तन्नित्यत्व सिध्येत् । तदन्यस्य नित्यत्वमनित्यत्वं वा ततः कथं सिध्येत्? नहि जीवस्यानुत्पत्तिरन्यत प्राप्ता येन निषेधस्य तत्र तात्पर्याभावादवधारणपर्यन्ताऽन्यत्र तदभावं गमयेत् । तथा सत्यन्यत्वाविशेषात् ब्रह्मणस्तद्गुणानांचानित्यत्वं कुतो न गमयेत् । ब्रह्मानुत्पत्तिपरतावादिनस्त्वमते जीवोत्पत्ति वा कथ न गमयेत् । अतो यत्किंचिदेतत् ॥

एतेन नचाय विरोधो ब्रह्मणाऽपि परिहर्तु शक्य. । धर्मज्ञाननित्यत्वेहि जीवोत्पत्तिप्रतिषेधवादिभ्यो जीवनित्यत्ववादिभ्यश्च श्रुतय. शरणम्. 'नात्मा श्रुतेः' इत्यधिकरणच। नतु गत्यन्तरमस्ति श्रुतिसूत्राणितु जीवस्वरूपमात्रपराणि त्वयैव वर्णितानि । एकविज्ञानेन सर्वविज्ञानश्रुतिश्चोपन्यस्ता । इत्थं सति धर्मज्ञाननित्यत्वं केन प्रमाणेन सिध्येत् । शौनकस्मृत्येतिचेत्, श्रुते प्रामाण्यं निरस्य बाधकत्वंचोक्ता कथ तत्र दुर्बलाया. स्मृते. प्रामाण्यमुच्यते । श्रुतिविरुद्धाहि स्मृतिर्नस्वार्थे प्रमाण स्यात् इति निरस्तम् ॥

जीवस्वरूपोत्पत्तिपराभि. श्रुतिभिरेव तन्नित्यत्वोपपादनात् । कण्ठतस्तन्नित्यत्वबोधकश्रुतीनामुदाहरणेन गत्यन्तराभावोक्तिरुन्मादविलसितत्वात् । एकविज्ञानश्रुतिरपि तत्सङ्कोचविकासादिबोधक श्रुत्यन्तरसमानार्था तन्नित्यत्वाविरोधिनी । 'प्राणावै सत्यम्' इति श्रुति. स्वरूपविकारज्ञानसङ्कोचविकासाद्यभावमात्रपरेव भाष्ये व्याख्याता। प्राणशब्देन प्राणसाहचर्याज्जीवाः परामृश्यन्ते तेतावत् सत्य वियदादिवत्स्वरूपान्यथाभावरूपपरिणामाभावात् । 'तेषामेष सत्यम्' तेभ्योऽप्येष परमपूरुषस्सत्यम् , जीवानां कर्मानुगुण्येन ज्ञानसङ्कोच विकासौ विद्येते, परमपुरुषस्यत्वपहतपाप्मनस्तौ न विद्येते इति । नह्ययं व्याख्याप्रकार धर्मज्ञाननित्यत्वविरोधिस्वरूपेण नित्यस्यापि सङ्कोचविकासयोरुपपादनात् । अतएव तस्य नित्यत्वे जीवात्मपरमात्मनोस्तुल्यतापत्तिरित्युक्तिरप्युन्मादविलसिता । कर्मकृतसङ्कोचविकाससद्भावासद्भावाभ्यामत्यन्तवैलक्षण्यस्य

तत्रैव भाष्ये व्यक्तमुक्तत्वात्। शौनकस्मृतेस्तत्र प्रामाण्याच्च। साहि ज्ञानस्य नित्यतां तस्य निरोधानं, प्रतिबन्धनिवृत्त्या तस्य विकासं च वदति। तस्य सूत्र काराभिमतत्वं बन्धमोक्षादिविधायकश्रुतिमूलकत्व च प्रागुपपादितम्। बाधक श्रुतिसद्भावोन्मादौपध च दत्तम्॥

यत्तु 'नात्मा श्रुतेः' इत्यधिकरणे शौनकस्मृत्यनुदाहरणेन तस्य मूषकचर्वणाभिधान तन्न मदविपर्यासात्। साहि दूषकस्यैव चर्वणं करोति। साहि जीवोत्पत्तितन्निषेधवादिन्यो. श्रुत्यो परस्पर परिपन्थिताप्रशमनेन बन्धमोक्ष व्यवस्थाप्रदर्शनेन श्रुत्युपबृंहणाय प्रवृत्ता तद्विरोधं वदतो दूषकस्य तथैव जिह्वां लुनाति अस्यां जागरूकायां कथं ज्ञानस्य जन्यत्व सिद्धमित्युन्मादविलसितम्। अवस्थान्तरापत्तिरेव कार्यतेत्यसकृदावेदनात्। सर्वविज्ञानप्रतिज्ञानमपि तत एवोपपन्नम्। एकद्रव्यगतावस्थाद्वयमूलकं ह्येकविज्ञानेन सर्वविज्ञानम्। नचावस्थान्तरापत्तिरूप ज्ञानगत कार्यत्वमौपचारिकमिति त्वदन्यस्य कस्याप्यमन्द मतेरशङ्का भवति। अन्यत्रापि सर्वत्र मृदादौ द्रव्ये स्वरूपतो नित्ये कार्यत्वमीदृग्रूपमेव। जीवेऽपि कार्यत्वमनौपचारिकमेव, श्रुतिप्रमितत्वात्। नहि—सद्वारकत्वमात्रेणौपचारिकत्व कर्तृत्वकर्मत्वकरणत्वादेस्सर्वस्य सद्वारकस्यौपचारिकत्वप्रसङ्गात्। अपृथक्सिद्धवस्तुगताह्यवस्था स्वस्मिन्ननौपचारिकीति प्रागुप पादितम्॥

एतेन— धर्मज्ञानस्योपचरितात्कार्यत्वात्सर्वविज्ञानप्रतिज्ञानोपपत्तिमाशङ्क्य जीवस्वरूपस्य मुख्यामुत्पत्ति विनाऽनुपपद्यमाना प्रतिज्ञाश्रुतिर्धर्मज्ञानस्य कार्यत्वमभ्युपगम्य तद्वशजीवस्वरूपस्य कार्यत्वमुपचर्य कथंचिन्निर्व्यूढा। धर्मज्ञानस्यापि कार्यत्व यद्युपचरित कथमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा निरूह्येत। उपचारोवा कथ युज्यते धर्मस्य कार्यत्वं शरणीकृत्य धर्मिण कार्यत्वमुपचरित, धर्मस्य कार्यत्वे किमन्यच्छरणीकरणीयमिति न विद्मइत्यप्युन्मादविलसितम इति स्पष्टमेव विदुषाम्। ज्ञानगतकार्यत्वस्यानौपचारिकत्वात्। जीवगताऽपृथक्सिद्धज्ञानद्वारकावस्थायाअप्यनौपचारिकत्वात्। तत्रौपचारिकत्वभ्रान्तेस्तदीयायाः दिवान्धमान्ध्यालाद्यन्धकारस्येव केनाप्यनिवर्तनीयत्वात्। नशवमुष्टिरन्यतोऽर्भकभावाद्विमोचनीया। अतोऽत्र विरोधोद्भावनमुन्मादविलसितमिति दिक्॥

G195

इति श्रीशैलकुलतिलक सर्वतन्त्रस्वतन्त्र श्रीनिवासार्य तनूजनुषा
लक्ष्माम्बागर्भशुक्ति मुक्ताफलवपुषा कौण्डिन्य
श्रीनिवासदीक्षितकटाक्षवीक्षासंलब्ध
मीमांसाद्वन्द्व निर्द्वन्द्वमतिविभवपुषा
अग्रजाचार्यदीक्षित परिचर्यासमासादित
चतुस्तन्त्री तन्त्री विनोदजुषा
श्रीनिवास विदुषा
विरचिते

## विरोध निरोधे—तृतीयो निरोधः

## अथ चतुर्थो निरोधः

यद्ज्ञानात्सर्वविज्ञानं श्रुतिषु स्मृतिषु श्रुतम् ।
अशेषजगतामीशं तमादेशमुपास्महे ॥

ननु चिदचिद्भ्यामत्यन्तविसजातीयं ब्रह्माभिमतम् । कृत्स्नं च चिदचिदात्मकम् । अत. कथं तद्ज्ञानेन कृत्स्नज्ञानं स्यात् ? नच रज्जुशुक्त्याद्यारोपित सर्पभूदलनाम्बुधारा रजतादीनामिव ब्रह्मण्यारोपित कृत्स्नं ब्रह्मज्ञानेनैव ज्ञायत इति श्रोत्रियवेतालानां कल्पना युक्ता । रज्वादेरधिष्ठानस्यास्वप्रकाशतया तस्मिन्नन्यारोपसम्भवेऽपि स्वयम्प्रकाशे ब्रह्मणि अन्यारोपासम्भवात् । नह्यधिष्ठानासाधारणरूपे प्रकाशमानेऽन्यारोपस्सम्भवति । प्रत्युत तदसाधारणरूपप्रकाशेऽन्यारोपनिवृत्तिरेवेति तद्ज्ञानेन तद्ज्ञानाभिधान विरुद्धमेव । मृद्घटादिदृष्टान्तश्च व्यधिकरणः ॥

यदपि सादृश्यप्राधान्याभ्यां तद्ज्ञानेन तद्ज्ञानमिति केषांचित्कल्पन तदपि दृष्टान्तवैघट्यादेव निरस्तम् । ब्रह्मप्रपञ्चयोरतिवैसादृश्याच्च । यदपि

प्रपञ्चस्य ब्रह्म प्रधान राजेव राष्ट्रस्य। तथापि न तदज्ञानात्तद्ज्ञान। राज्ञिज्ञाते ऽपि तद्ग्रामनगरजनपदतत्स्थजनादिषु सन्देहदर्शनात। सत्यं सन्देहो भवति। तथाऽपि प्रधानभूते राज्ञि ज्ञाते तेनैव सर्वफलसिद्धे नान्यद्ज्ञातव्यमवशिष्यत इतिचेत्–नैतत तदज्ञानेन तद्ज्ञान. ज्ञातप्रायत्वन्तु न मुख्यम्। अविज्ञातादिपदानां वैयर्थ्य च ॥

अथ कारणज्ञानात्कार्यभूत कृत्स्न जगत ज्ञायतइत्यर्थइत्युच्येत। अकार्यभूतानां नित्यानां कथ तदज्ञानेन ज्ञान स्यात। नच नित्याएव न सन्ति वैशेपिकादिभिराकाशादेर्निरवयवद्रव्यत्वादिहेतुना नित्यत्वसाधनात्। नच श्रुत्या सर्वकारणत्ववादिन्या तद्बाध अनादिर्वाऽयमाकाश' ' इत्यादिभिराकाशादेरनादित्वाम्नानात्। जीवानां तु नित्यत्वे न कस्यापि विवाद। नच ज्ञानसङ्कोचविकासादिभिस्तत्कार्यता: असङ्कुचितज्ञानेष्वनन्तगरुडादिषु तदसम्भवात दण्डादिज्ञानेऽपि घटाद्यज्ञानेन कारणज्ञानात्कार्यज्ञानस्य नैयत्यासिद्धेश्च। नचोपादानज्ञानादुपादेयज्ञानमिह विवक्षितम। मृद्घटादिदृष्टान्तदर्शनात्। तच्च कार्याभिन्न कारणमिति तद्ज्ञानात्तद्ज्ञानं सुलभमिति वाच्यम्–तथासति ज्ञातमेव ज्ञातमिति अविज्ञात विज्ञातमित्यनुपपन्नम इतिचेत्—

अत्रोच्यते–चिदचिच्छरीरकत्वाद्ब्रह्मणस्तद्वाचिन सर्वेऽपि शब्दा. चिदचिद्विशिष्टपराइत्युपपादितम। विशिष्टज्ञाने च विशेषणानामपि विषयत्वात्तद्ज्ञानं सुलभम ॥

नन्विद न अविज्ञातस्य विज्ञानमिति तत्र अविज्ञात विज्ञातम्भवति' इत्युक्तिर्नसङ्गच्छतइतिचेत–नैतत् अवस्थाभेदेन तदुभयरूपतोपपत्ते'। सूक्ष्म चिदचिच्छरीरके ब्रह्मणि ज्ञाने स्थूलचिदचिच्छरीरकस्य तस्य ज्ञानमत्राभिमतम्। तत्राज्ञातत्व स्थूलावस्थावैशिष्ट्येन ज्ञातत्वच सूक्ष्मावस्थावैशिष्ट्येनेत्य विरोधात्। जीवानामपि धर्मज्ञानद्वारक सूक्ष्मावस्थावैशिष्ट्य स्थूलावस्थावैशिष्ट्यचास्त्येव। अनन्तादिषु यद्यप्यवस्थाद्वय नास्ति। तथाऽपि 'कस्मिन्नु भगवो विज्ञाते सर्वमिद विज्ञात भवति' आत्मनि खल्वरे दृष्टे श्रुते मते इद सर्वं विज्ञात भवति' इत्यत्र ज्ञातव्ये इदशब्दनिर्देशात् लीलाविभूतिविशिष्ट ज्ञानमेवविवक्षितम: तस्यैव ज्ञातव्यकोट्यन्तर्भावात्। नित्यविभूते. प्राप्यकोट्यन्तर्भावात्। 'परमेव्योमन सोऽश्नुते सर्वान्कामान्त्सह ब्रह्मणा' इति

श्रवणात् 'येनाश्रुतम्' इत्यत्र इदंशब्दाश्रवणेऽपि 'अप्राक्ष्य' इति प्रष्टव्यतया ऽभिधानेन कारणस्यैव ध्येयतया प्रष्टव्यत्वात्तन्मात्रविषयत्वं सिद्धम् ॥

यत्तु वियदादेर्नित्यत्वं वैशेषिकाद्युक्तं तन्न् समयपादे सूत्रकारैरेव 'नवियदश्रुतेः' इत्यादिना दूषितम् । तथाहि वियन्नोत्पद्यते तदुत्पत्तिबोधकश्रुत्यभावात् । छान्दोग्ये हि 'तदैक्षत बहुस्याम' इति सृष्टिं सङ्कल्प्य 'तत्तेजोऽसृजत' इत्यत्र तेजोबन्नानामेव सृष्ट्यभिधानात् । नचोपपद्यते, निरवयवस्य तस्यावयवोपचयरूपावस्थान्तरापत्त्यसम्भवात्, सर्वगतत्वाच्च नात्मनइवोत्पत्तिस्सम्भवति । अतएव 'आत्मनआकाशस्सम्भूत' इति न स्वरूपोत्पत्तिपरा अपित्वागन्तुकशब्दादिविशिष्टावस्थावत्त्वमात्रपरा । नहि श्रुतमित्येतावताऽनुपपन्नमङ्गीक्रियते । यूपादित्यैक्यादेरपि 'आदित्यो यूप' इत्यादिश्रुतिबलात् सिद्धिस्स्यात् । अतो वियन्नित्यमिति प्राप्ते उच्यते—'अस्तितु' अस्त्येवाकाशोत्पत्तिपरा श्रुतिः 'आत्मन आकाशस्सम्भूतः' 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापःपृथ्वीविश्वस्य धारिणी' इत्यादि । अतीन्द्रियेचार्थे श्रुतिरेव प्रमाणम् । अतो न यूपादित्यैक्यतुल्यता । तत्रहि प्रत्यक्षेण बाधः । नह्येवमाकाशोत्पत्तिः प्रत्यक्षबाधिता । निरवयवत्वाद्यनुमानन्तु श्रुतिबाधेन नरशिरःकपालशुचित्वाद्यनुमानवन्नोदेतुमर्हति, महदादौ व्यभिचारितत्वाच्च । स्वरूपासिद्धं च पञ्चीकरणप्रक्रियया तस्यापि सावयवत्वात् । नहि निरवयस्यैकदेशोपादानं सम्भवति ॥

ननु च छान्दोग्ये तेजस उत्पत्तिप्राथम्यात् 'वायुश्चान्तरिक्षंचैतदमृतम्' इत्यमृतत्वश्रवणाच्च तदुत्पत्तिश्रुतिर्गौणी । नचैतावता पृथिव्यादेरपि तथात्वप्रसङ्गः, बाधकसद्भावासद्भावाभ्यां विशेषात् । दृश्येतेहि एकस्यापि शब्दस्यैकप्रकरणगतस्य विषयभेदेन गौणत्वागौणत्वे, यथा ब्रह्मशब्दस्य । 'सहि तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इत्यत्र प्रकृतिपरो गौणः । तत्रैव 'तपसा चीयते ब्रह्म' इत्यत्र परब्रह्मपरो मुख्यः । एवं सम्भूतशब्दो जनिधातुश्चाकाशविषयावमुख्यावेव । तदेतदाह 'गौण्यसम्भवाच्छब्दाच्च' 'स्याच्चैकस्य ब्रह्मशब्दवत्' इति । तत्रोत्तर 'प्रतिज्ञाहानिरव्यतिरेकात्' 'शब्देभ्यः' 'यावद्विकारन्तु विभागो लोकवत्' इति । न तावच्छान्दोग्ये तेजसउत्पत्तिप्राथम्यादाकाश-

स्यानुत्पत्ति : परमोपक्रमे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाने 'सदेव सौम्येदमग्रआसीदेकमेवाद्वितीयम' इति प्राक्सृष्टेरेकत्वावधारणेनोपसहारेऽपि 'ऐतदात्म्यमिद सर्वम' इति कृत्स्नान्तर्गतस्य तस्याकाशस्यापि विभागरूपोत्पत्तिवचनेन वियतोऽपि तत्कार्यत्वावगमात् । यथा हि लोके एतेसर्वे देवदत्तपुत्रा इति प्रतिज्ञाय तत्र केषांचिदुत्पत्तिवचनेऽन्येषामपि ततउत्पत्तिरुक्तास्यात् । अमृतत्त्वोक्तिस्तु चिरकालस्थायित्वाभिप्राया न श्रुतामुत्पत्ति निवारयितुं समर्था । एवं मातरिश्वनो वायोरप्युत्पत्तिर्व्याख्यातेत्याह—एतेन 'मातरिश्वा व्याख्यात' इति तुल्यन्यायत्वादुभयोर्युगपदभिधानम् । पृथग्योगकरणन्तु 'तेजोऽत.' इत्यत्र अत इत्यत्र वायोर्ग्रहणार्थम् ॥

नन्वेवं उक्तप्रतिज्ञाहान्यादिभिर्जीवानामपि स्वरूपोत्पत्ति स्यात् । तन्नित्यत्वश्रवणस्यापि चिरकालस्थायितयोपपत्तेरितिचेत् मैवम्—बाधकसद्भावासद्भावाभ्यां वैषम्यात् । आत्मनस्तावत् स्वरूपतउत्पत्तिस्वीकारे कृतहानाकृताभ्यागमदोषो बाधक. । आकाशस्य तथात्वे न किंचिदस्ति बाधकम् । तथाऽऽत्मनो जननमरणे निषिध्येते 'नजायते म्रियते वा विपश्चित्' 'अविनाशी वाऽरेऽयमात्मा इति । अजत्वनित्यत्वे च श्रूयेते 'अजो नित्य शाश्वतोऽयं पुराण' ' 'अजोह्येको जुषमाणः' 'नित्योनित्यानाम्' इत्यादि । प्रलयेऽपि च सद्भावः श्रूयते 'एकोमनीषी वशी निष्क्रियाणां बहूनाम्' इति । आकाशवाय्वोस्तु सर्वमिद विपरीतम । अतस्तत्रोत्पत्तिश्रुति स्वरूपोत्पत्तिपरैव । असतिबाधके स्वरूपोत्पत्तिपरत्वं हि न्याय्यम । जीवेतूक्तबाधकबलात् स्वरूपोत्पत्तिपरत्वासम्भवात् ज्ञानद्वारकोत्पत्तिरङ्गीक्रियते । नचैतावता तदुत्पत्तिरमुख्या . उत्पत्तिपदप्रवृत्तिनिमित्तस्यावस्थान्तरवत्त्वस्योभयत्र तौल्यात् । साक्षात्त्वस्याप्रयोजकतया निवेशासम्भवस्य प्रागुपपादनात् । अन्यथा 'अजायमानो बहुधा विजायते', इत्यादिश्रौतव्यवहारमात्रामुख्यत्वप्रसङ्गात् । शरीरद्वारकोत्पत्तेरिव ज्ञानद्वारकोत्पत्तेरपि 'सहि विद्यातस्तं जनयति, तच्छ्रेष्ठ जन्म शरीरमेव मातापितरौ जनयतः' इति महर्षिभिरेवाभिधानात् । अतः 'इदं सर्वमसृजत' इत्येकरूपोत्पत्त्यभिधानेऽपि तदवान्तरवैलक्षण्यं 'दत्तौरसादिष्वमीषु षट्पुत्रेषु' इत्यादौ पुत्रत्वव्यवहाराविशेषेऽप्यवान्तरवैजात्यवत् प्रमाणान्तरसिद्धं नापह्नोतु शक्यम । एवं सिद्धे सैद्धान्तिके तत्त्वनिर्णये—

यत् केनचित् स्वाभिमतदुष्पदवामना मदिरास्वादमत्तचित्तेन जल्पित— 'न वियदश्रुते' ' इत्यत्र छान्दोग्ये तेजआदिभूतत्रयस्यैव जनिश्रवणात् वियदुत्पत्त्यवचनादाकाशं नोत्पद्यत इति प्राप्ते ' अस्तितु ' इति सूत्रकारेण छान्दोग्ये तदश्रवणेऽपि तैत्तिरीये ' आत्मन आकाशस्सम्भूत ' इति तदुत्पत्तिश्रवणाद्वियदुत्पत्तिरस्तीत्युक्त्वा ' गौण्यसम्भवाच्छब्दाच्च ' इति सूत्राभ्यां वियदुत्पत्तिश्रुतिगौणी निरवयत्वादिहेतोः ' वायुश्चान्तरिक्षचैतदमृतम् ' इत्यादिश्रुतेश्चेत्युक्त्वा, वियदुत्पत्तिश्रुतेर्गौणत्वे ' आत्मन आकाशस्सम्भूतः ' इत्यत्रैकस्यैव सम्भूतशब्दस्य वियदंशे गौणत्व तेज आद्यशे मुख्यत्वचेत्यर्धजरतीय स्यादिति दोषमुद्भाव्य ' स्याच्चैकस्य ब्रह्मशब्दवत् ' इति सूत्रेण यथैकस्य ब्रह्मशब्दस्य ' तपसा ब्रह्मविजिज्ञासस्व ' इत्यधिकारे अन्नादिषु गौणत्वं आनन्दे मुख्यत्वं तथैकस्यापि सम्भूतशब्दस्यांशभेदेन मुख्यत्व गौणत्वचोपपद्यतइति वियदुत्पत्तिश्रुतेर्गौणत्वं समर्थ्य ' प्रतिज्ञाहानिरव्यतिरेकात् ' इति सूत्रेण सिद्धान्तितम् ॥

अत्र रामानुजीयं भाष्यम्—छान्दोग्यश्रुत्यनुसारेणान्यासां वियदुत्पत्तिश्रुतीनां गौणत्व कल्पयितु न युज्यते। यतश्छान्दोग्यश्रुत्यैव वियदुत्पत्तिरङ्गीकृता ' येनाश्रुतं श्रुतम् ' इत्यादिना ब्रह्मज्ञानेन सर्वविज्ञानप्रतिज्ञानात्। तस्याः प्रतिज्ञाया अहानिराकाशस्यापि ब्रह्मकार्यत्वेन तदव्यतिरेकादेव भवतीति। एव वियदधिकरणे आकाशस्य मुख्यैवोत्पत्तिरिति सिद्धान्तं कृत्वा ' एतेन मातरिश्वा व्याख्यातः ' इत्यधिकरणे ' सैषाऽनस्तमिता देवता यद्वायुः ' इति श्रुत्या नित्यत्वे कथितेऽपि तदुत्पत्तिर्वियदधिकरणन्यायेनाङ्गीकर्तव्येत्युक्तम् ॥

अत्र रामानुजीयं भाष्यम्—अनेन हेतुना मातरिश्वनो वायोरप्युत्पत्तिर्व्याख्याता ' इति। इत्थमधिकरणद्वये वियद्वाय्वोः स्वरूपोत्पत्ति विना सर्वविज्ञानप्रतिज्ञाश्रुतिर्नोपपद्यतइत्युक्त्वा ' नात्मा श्रुतेः ' इत्यधिकरणे जीवस्य स्वरूपोत्पत्ति विनापि धर्मोत्पत्तिमात्रेण सर्वविज्ञानश्रुतिरुपपद्यत इत्युक्तत्वात्पूर्वापर विरोधः। यदि धर्मोत्पत्त्या धर्मिणो जीवस्याप्युत्पत्तिमुपचर्य प्रतिज्ञा निरूह्यते तदा शब्दादिधर्मोत्पत्त्याऽकाशादीनामप्युत्पत्तिमुपचर्य प्रतिज्ञानिर्वहण युक्तम्। तदपहाय ' वायुश्चान्तरिक्षचैतदमृतम् ' ' आकाशवत्सर्वगतश्चनित्यः ' इत्यादि श्रुतिसिद्ध न्यायतन्त्रसिद्धचाकाशनित्यत्वमुत्सृज्य स्वरूपोत्पत्तिमङ्गीकृत्य प्रतिज्ञा निर्वहणमुन्मादविलसितमिति तदेतत्सर्वमयुक्ततरम्—

तथाहि–अनुवादस्तावदापादचूडमसमीचीनम ‘ अश्रुतेः ’ इत्यस्य छान्दोग्ये ‘ वियदुत्पत्त्यश्रवणात् ’ इत्यथाभाष्यानुवादात् । इत्थहि तत्र भाष्यं ‘ न वियदुत्पद्यते ’ कुत. ? ‘ अश्रुते ’ सम्भावितस्यहि श्रवणसम्भवः । असम्भावितस्य तु गगनकुसुमवियदुत्पत्त्यादे शब्दाभिधेयत्व न सम्भवति । न खलु निरवयवस्य सर्वगतस्याकाशस्यात्मनइवोत्पत्तिर्निरूपयितु शक्यते । अत एवोत्पत्त्यसम्भवाच्छान्दोग्ये सृष्टिप्रकरणे तेज:प्रभृतीनामेव सृष्टिराम्नायते इति । यूपादित्यैक्यादिवदयोग्यस्यार्थस्य श्रुत्यादिप्रतिपादनासम्भवात् । निरवयवस्य सर्वगतस्योत्पत्त्यनर्हस्य कथ श्रुतिरप्युत्पत्तिमभिदध्यात् । अत्र छान्दोग्यादिषु अनभिधानमुपष्टम्भकम् । अतस्तैत्तरीयादिषु तच्छ्रवणं नार्थव्यवस्थापकमित्यभिप्रायो गम्यते । अय ‘ गौण्यसम्भवात् ’ इत्युत्तरस्वारस्यादवगम्यते । ‘ अस्ति तु ’ इतितु यूपादित्यादिष्विव प्रत्यक्षविरोधाभावात्, अनुमानस्यचाप्रयोजकत्वात् कालात्ययापदेशाच्च. अस्तिश्रुतिस्तत्प्रतिपादनसमर्थेत्याभिप्रायकम । अतस्तत्सूत्रार्थानुवादस्तावदुन्मादविलसित. ॥

‘ गौण्यसम्भवाच्छब्दाच्च ’ इति सूत्राभ्यामित्येकसूत्रस्य सूत्रद्वयत्वेनानुवादो द्वितीय उन्माद । अवान्तरसाध्यविपर्यहेतुद्वयपरतयैकसूत्रत्वस्य श्रुतप्रकाशिकायामुपपादनात् ॥

एवं गौणत्वोपपादकहेतुद्वये असम्भवशब्दनिरूप्ये निरवयवत्वादिहेतोरित्यसम्भवहेतूपपादनमप्युन्मादविलसित तृतीयम् । ‘ अस्तितु ’ इति सूत्रएव श्रुतिबाधेन तस्य हेतो कालात्ययापदिष्टत्वोपपादनेन पुनरिह तदुन्मेषासम्भवात् । अतएव तेज आदे प्राक् पश्चाद्वाऽकाशादुत्पत्तेश्छान्दोग्ये प्रतिपादनासम्भवादित्येव व्याख्यातम् ॥

एवं ‘ ब्रह्मशब्दवत् ’ इति सूत्रस्य तपसा ब्रह्म विजिज्ञासस्व ’ इत्यधिकारे अन्नादिषु गौणत्वमानन्दे मुख्यत्वमिति कथनमप्युन्मादविलसितम् । भाष्ये तपसा चीयते ब्रह्म इत्यत्र मुख्यत्व, तस्मादेतद्ब्रह्मनामरूपमन्नंच ’ इत्यत्र प्रकृतोप्रयुक्ततया गौणत्वस्यचाभिधानात् । नचाविशेष. अन्नादिषु ब्रह्म दृष्ट्योपासनस्य तत्राभिमततया तत्र ब्रह्मशब्दगौणत्वानुपपत्ते. । ‘ प्रतिज्ञाहानिः ’ इति सूत्रे सिद्धान्त. कृतइत्युन्मादविलसित पञ्चमम् । ‘ अस्तितु इत्यनेनैव सिद्धान्तस्य कृतत्वात्, चोद्यपरिहार. कृतइतितु युक्तम् ॥

'एतेन मातरिश्वा' इत्यस्याधिकरणान्तरत्वाभिधानं षष्ठमुन्मादविलसितम्। अधिकाशंकाभावेन अधिकरणान्तरत्वाभावस्य भाष्यश्रुतप्रकाशिकयोः व्यक्तत्वात्। 'वियन्मातरिश्वनोः पृथग्योगकरणं 'तेजोऽतस्तथा ह्याह' इत्यत्र मातरिश्वपरामर्शार्थम्' इति हि भाष्यम्। अधिकरणान्तरत्वे कुतः पृथग्योगकरणशंका, कुतो वा तत्समाधानम्? श्रुतप्रकाशिका च— 'अधिकरणान्तरत्वमयुक्तम् अधिकाशंकाविरहात्। सर्वगतद्रव्यत्वादिहेतुप्रसङ्गविरहेण न्यूनत्वाच्च। 'सैषाऽनस्तमिता देवता यद्वायु' रिति श्रुत्या अधिकाशंकेतिचेन्न; 'वायुश्चान्तरिक्षं चैतदमृतम्' इत्यमृतत्वश्रवणस्य वियन्मातरिश्वनोस्तुल्यतया परिहारस्य च तुल्यत्वात्। अनस्तमितशब्दस्यामृतशब्दतुल्यतया पृथुक्परिहरणीयत्वाभावाच्च' इति दृश्यते॥

अतएव 'सैषाऽनस्तमिता देवता यद्वायु' रिति श्रुत्या नित्यत्वोक्तौ स्वात्तदुत्पत्तिः वियदधिकरणन्यायेनांगीकर्तव्येत्युक्तमित्यपि सप्तममुन्मादविलसितम्। तस्याः श्रुतेः 'वायुश्चान्तरिक्षञ्चैतदमृत' मिति श्रुतिसमानार्थतया अधिकाशंकाहेत्वभावस्य उपपादितत्वात्। इत्थमधिकरणद्वये वियद्वायोरित्याद्यष्टमुन्मादविलसितम्। धर्मोत्पत्त्या धर्मिणो जीवस्याप्युत्पत्तिमुपचरयंति नवममुन्मादविलसितम्। तस्यौपचारिकत्वस्य पूर्वनिरोधे उपपादनात्। 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुतिसिद्धं नित्यत्वमुत्सृज्येति दशममुन्मादविलसितम्। तत्र सर्वगतत्वमात्रदृष्टान्तोपपत्त्या तेनैकान्त्ये नित्यत्वासिद्धेः। तथा च श्रुतप्रकाशिका... 'आकाशवत्सर्वगतश्च नित्यः' इत्यत्र व्याप्तिमात्रेण साम्यविवक्षाया अपि संभवात्। 'आकाशशरीरं ब्रह्म' इत्यादेः सूक्ष्मनिर्मलस्वरूपत्वाभिप्रायेण निर्वाहसंभवाच्च पूर्वपक्षसाधकत्वेनानुपन्यास' इति आकाशात्मनोस्स्वरूपोत्पत्तौ धर्मोत्पत्तौ च अविशेषकथनमेकादशमुन्मादविलसितम्। बाधकसद्भावासद्भावाभ्यां तद्वैषम्यस्य प्रागुपपादनात्॥

यच्च शब्दस्याकाशगुणकत्वं स्वाभाविकं ज्ञानस्य जीवगुणत्वमुपचरितं तस्य द्रव्यत्वाभ्युपगमात् गुणत्वव्यवहारः तदाश्रयत्वतच्छेपत्वनिबन्धनं इ-

त्युक्त्वाच्च । इत्थं स्वाभाविकशब्दादिगुणोत्पत्तावपि आकाशादीनां स्वरूपोत्पत्तिं विना प्रतिज्ञानिर्वहणं इत्युक्तम् । जीवस्योपचरितज्ञानगुणोत्पत्तिमात्रेण प्रतिज्ञानिर्वहणं न युक्तम् ॥

किंच 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिसकलवेदान्तसिद्धं जीवस्य ब्रह्माव्यतिरेकमपहाय सकलवेदान्तविरुद्धं ज्ञानस्य कार्यत्वं स्वीकृत्य तद्वशाज्जीवस्य कार्यत्वमुक्त्वा ब्रह्मकार्यत्वेन ब्रह्माव्यतिरेकमुक्त्वा ततः प्रतिज्ञानिर्वहणं न युक्तम् ॥

किं च आकाशवाय्वोर्नित्यत्वे प्रतिज्ञाहानिमाशङ्क्य तयोरुत्पत्तिं प्रसाध्य जीवस्य नित्यत्वं स्वयमेव प्रसाध्यापि प्रतिज्ञाहानिमनाशङ्कमानः सूत्रकारः जीवब्रह्मणोरैक्यं मन्यत इति बालानामपि सुगमम् । इत्थं सति जीवब्रह्मणोरभेदे सूत्रकारतात्पर्यवर्णनमनङ्गीकाराभिमाने तदन्यबोधविलसितम् । ज्ञानस्य तावत् आश्रयानिवर्तित्वावस्थान्तरयोगित्वादिभिरुदाहृतप्रमाणशतप्रसिद्धेः द्रव्यत्वं भाष्यादिष्वेवोक्तम् । शब्दस्य तद्वैपरीत्येन अद्रव्यत्वं न्यायसिद्धाञ्जने प्रपंचितम् । सारदर्पणे अस्माभिरपि विवेचितम् । द्रव्याश्रितस्वभावत्वलक्षणापृथक्सिद्धविशेषत्वातिरिक्तगुणत्वादर्शनात् । तद्यथानीरुक्तकर्मातिरिक्तजातिमात्राश्रयत्वादिरूपगुणलक्षणसंकेतस्य अस्माभिः अनादरणादिति दीपादित्यप्रभादाविव द्रव्यत्वेऽपि द्रव्यान्तरापृथक्सिद्धत्वं तदनुविधायित्वं च अविरुद्धमिति भाष्यादिषु व्यक्तम् । अतः शब्दादिषु स्वाभाविकं गुणत्वं ज्ञाने तूपचरितमित्यभिमतार्थाज्ञानमूलत्वादुन्मादविलसितम् ॥

अस्तु वा तथात्वं, किं तेन स्यात् ? आकाशवत् जीवस्य स्वरूपान्यथात्वं वा जीववदाकाशस्य स्वभावान्यथात्वं वा स्यादिति चेत्—कुतो हेतोरिति विवेचनीयम् ॥

किं त्वया मुख्यगुणवत्त्वं स्वभावान्यथात्वव्याप्यं अमुख्यगुणवत्त्वं वा स्वरूपान्यथात्वव्याप्यं विपरीतं वा क्वचित् तत्र दृष्टमिष्टं वा केन चित् ? प्रत्युत मुख्यगुणवतामेव स्वरूपोत्पत्तिः अमुख्यगुणवतां स्वभावोत्पत्तिरिति युक्तमाश्रयितुम् । तथा हि— आकाशात्मनोस्सर्वविज्ञानश्रुत्या सामान्यरू

पया 'आत्मन आकाशस्सम्भूत' 'प्रजापतिः प्रजा असृजत' इत्यादिकया विशेषरूपया च उत्पत्तिरवगम्यते । साच अन्तरङ्गत्वात् प्रथम स्वरूपगतैव प्रतीयते । तत्र सति बाधे स्वभावे पर्यवस्यति । विशेष्ये बाधे विशेषणोपसंक्रमणस्य न्याय्यत्वात् । तत्र च जीवे कृतहानाकृताभ्यागमौ उत्पत्तिविनाशप्रतिषेधकप्रत्यक्षश्रुतिसहितनित्यत्वव्यपदेशाः प्रलयसमयवर्तित्वं स्वाभाविकस्वरूपविर्भावलक्षणमोक्ष तत्तिरोधानलक्षणबन्धप्रतिपादकश्रुतिसहितं स्वरूपानुत्पत्तिगमकमस्ति बाधकम् । स्वभावान्यथाभावसाधकं च आकाशे नास्ति बाधकम् । अमृतत्वश्रवणमात्रं त्वन्यथासिद्धम् । स्वभावान्यथाभावे च नास्ति साधकम् । अवस्थावत्त्वं हि द्रव्यासाधारणधर्मः । शब्दादयस्तु गुणाः । अतो न तत्र स्वभावान्यथात्वं, ज्ञानं तु द्रव्यमिति अवस्थान्तरं युक्तं श्रुतं च । अतो नाकाशादिषु स्वभावान्यथाभावः प्रतितिबन्धीति अमुख्यगुणस्य स्वभावान्यथात्वानुकूलस्य तत्प्रतिकूलतया उपपादनमुन्मादविलसितं द्वादशम् ॥

एवं स्वाभाविकगुणोत्पत्तावप्याकाशादीनां स्वरूपोत्पत्तिं विना प्रतिज्ञाश्रुतिर्नोपपद्यत इत्युक्त्वा जीवस्य उपचरितज्ञानगुणोत्पत्तिमात्रेण प्रतिज्ञानिर्वहणमित्यपि त्रयोदशमुन्मादविलसितम् ॥

'प्रतिज्ञाहानिरव्यतिरेकात्' इत्यस्य 'तत्त्वमस्याद्य' भेदश्रुत्यवगतजीवब्रह्मस्वरूपतादात्म्यरूपाव्यतिरेकपरत्वमपहाय अन्यथाव्याख्यानमयुक्तमिति चतुर्दशमुन्मादविलसितम् ॥ मृद्घटादिदृष्टान्तीकरणेन ब्रह्मकार्यत्वेनैव ब्रह्माव्यतिरेकस्य तत्र वक्तव्यतया चिदचिदात्मककृत्स्नविषयकप्रतिज्ञाया चिन्मात्रविषयकाव्यतिरेकविषयकत्वेन सङ्कोचनौचित्येन 'सर्वं खल्विदं ब्रह्म तज्जलानिति' उपादानोपादेयभावनिबन्धनसामानाधिकरण्यप्रतिपादकश्रुत्यन्तरानुसारेण मृद्घटादिदृष्टान्तेनाद्रितस्य 'एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इत्यन्तर्यामिब्राह्मणाद्यवगतशरीरात्मभावनिबन्धनत्वेन अन्यथासिद्धत्वस्य च सामानाधिकरण्यस्य च स्वरूपाभेदैकान्त्यात् सर्ववेदान्तानां भेदैकान्ततायाश्च प्राचीनग्रन्थेषु विस्तरेणोपपादनात् भेददर्पणे च अस्माभिस्स

म्याङ्गिनरूपणात् ॥ सूत्रकारश्च— 'भेदव्यपदेशाच्चान्यः' 'उभयेऽपि हि भेदेनैनमधीयते' 'अनुपपत्तेस्तु न शारीरः' 'नेतरोऽनुपपत्तेः' कर्मकर्तृव्यपदेशाच्च' 'भोगमात्रसाम्यलिंगाच्च' इत्यादिषु बहुशो जीवब्रह्मभेदमुद्घोषयद्भिः इहाभेद उक्त इति कल्पनाया अयुक्तत्वात् । वियत्कार्यत्वप्रतिपादनैकान्तसूत्रसंदर्भमध्यगताव्यतिरेकोक्तेः कार्यत्वाव्यतिरेकपरत्वस्य विना बाधकेन त्यागायोगात् । अज्ञत्वसर्वज्ञत्व, अणुत्वमहत्त्व, कर्मवश्यत्वाकर्मवश्यत्व, शेषत्वशेषित्व, नियाम्यत्वनियन्तृत्व, शरीरत्व, प्राप्यत्वप्राप्तृत्व, उपास्यत्वोपासकत्वादिभिः बाधन 'तत्वमसि' इत्यादिसामानाधिकरण्यात्मकवाक्यमात्रेण तदभेदकल्पनायोगाच्च ॥ त्रिदिलमेव बुद्धिमतां यदाकाशवाय्वोर्नित्यत्वे प्रतिज्ञाहानिमुक्तवतो जीवस्य नित्यत्वं प्रसाध्यापि तदनाभिधाने वादरायणस्य ब्रह्माभेद अनुमत इति तद्भेदकथनमयुक्तमिति तत् पञ्चदशमुन्मादविलसितम् ॥

प्रतिज्ञायाः कृत्स्नवस्तुविषयिण्याः कृत्स्नकार्यत्वगमकतया जीवकार्यत्वस्यापि तेनैव सिद्धतया तत्र प्रतिज्ञाहान्यनुक्तेरसिद्धेः । 'नात्मा श्रुतेः' इति तन्नित्यत्वोक्तिस्तु तत्र वियदादितुल्यस्वरूपत्ववारणायेति भाष्य एव व्यक्तम् । युक्तं चैतत् । प्रतिज्ञाहानिसूत्रं वियदधिकरणगतत्वाद्यदि तन्मात्राविषयं कुतस्तर्हि वायुविषयता ? यदि तु ब्रह्मातिरिक्तकृत्स्नविषयत्वाद्वायुविषयता, तर्हि तद्वदेव जीवविषयताऽप्यस्तु । अतस्तत्रार्धजरतीयाश्रयणमुन्मादविलसितमेव । कण्ठोक्तभेदनिर्देशशतविरुद्धसूचनकुशकाशावलंबनम् अभेदमुपजीव्य भेदवाद्युपहसनमुन्मादविलसितमिति अलमनेनोन्मत्तचित्तजनसंभाषणदोषेणेति दिक् ॥

इति श्रीशैलश्रीनिवासविरचिते विरोधनिरोधे

॥ चतुर्थो निरोधः ॥



# अथ पञ्चमो निरोधः

शास्त्रार्थवत्त्वात् कर्तृत्वं यदायत्तं शरीरिण ।
तद्धर्मालोपकर्तारं श्रियो भर्तारमाश्रये ॥

ननु नत्वस्य कर्तृत्वं युक्तम् । 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥' इति तस्य कर्तृत्वनिषेधात् । अत एव तस्य परमात्मायत्तत्वकल्पनमपि न युक्तम् । भृत्यकर्तृकयुद्धादेः राज्ञीव परमात्मन्यपि जीवकर्तृककर्मफलभाक्त्वासक्तेश्च । न च युद्धादे राजप्रयोज्यत्वात् युक्तं तत्फलस्य राजगामित्वम् । जीवकर्तृककर्मणां तु श्रुतिस्मृतिप्रयोज्यप्रयोगाणां न भगवदाज्ञाऽऽयत्तत्वमिति न तत्फलस्य भगवद्गामित्वेति वाच्यम् । श्रुतिस्मृत्योर्भगवदाज्ञारूपत्वात् । तथाहुर्महर्षयः— 'श्रुतिस्मृती ममैवाज्ञा' इति । अतो जीवस्य कर्तृत्वं तस्य परायत्तत्वं च युक्तमिति चेत्— अत्र ब्रूमः—

यदि जीवः कर्ता तदा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'न कलञ्जं भक्षयेत्' इत्यादिविधिनिषेधशास्त्रादिकमधिकृत्य प्रवर्तन्तां न तावदचेतनं, तस्य कर्तृत्वभोक्तृत्वशक्तिविरहात् । नचेतनमपि परमात्मानं, तस्य 'अनश्नन्न्या अभिचाकशीति' इत्यभोक्तृत्वश्रवणात् । अत एवाकर्तृत्वनिश्चयाच्च । शास्त्रफलं प्रयोक्तरि भगवति । अतः शास्त्रार्थवत्त्वाय जीवस्य कर्तृत्वमास्थेयम् । तदाह सूत्रकारः— 'कर्ता शास्त्रार्थवत्त्वात्' इति ॥

यत्तु कर्तृत्वं कार्यानुकूलकृतिमत्त्वम् । ततश्च कृत्यात्मनां जीवस्य परिणामोऽभ्युपगन्तव्यः । तदभ्युपगमे स्वरूपान्यथाभाव उक्तो भवति । स च नास्ति जीवस्येति 'नात्मा श्रुतेः' इत्यत्रोक्तम् । अतः पूर्वापरविरोध इति केनचित्प्रलपितम् । तत्रेदं वक्तव्यम् । इह प्रयत्नादेः बुद्धिविशेषरूपतया कार्यानुकूलकृतिमत्त्वरूपस्यापि कर्तृत्वस्य ज्ञानविशेषरूपतया तस्य स्वाभाविकतया तदात्मना जीवस्य ज्ञानस्य नित्यत्वेऽपि तत्परिणामविशेषस्यानित्यत्वाच्च ॥ यत्त्वेवं धर्मभूतज्ञानस्यैव कर्तृत्वं स्यादिति दूषणमभिधाय— 'नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति परिणामोक्ते

उन्मादविलसितत्वात् '। नचैवं कर्तृतायाः सावधिकत्वप्रसङ्गः । इष्टत्वात् तथोक्तं गीतायाम् । ज्ञानस्य नित्यत्वेऽपि तत्रेष्टापत्तिवारणाय तस्यानात्मत्व प्रतिपाद्यम् । तदुपपादकतया तस्यानित्यत्वं प्रसाध्य तथाऽपि तस्यात्मत्वेऽनिष्टप्रसङ्गमुक्त्वा दूषणान्तरैश्च ज्ञानस्य अकर्तृत्व निरूप्य आत्मस्वरूपस्यैव कर्तृत्व स्वीकर्तव्यम् । ततश्च विरोधः परिणामाभ्युपगमात् दुर्वार इत्युपसहृतं तदप्यनेकोन्मादविलसितम् । तथाहि—

परिणामविशिष्टज्ञानस्यैव कृतिरूपतया तदाश्रयस्यात्मनः कर्तृत्वे निरूपिते तेन ज्ञानकर्तृत्वाशङ्काया उन्मादरूपत्वात् । नहि ज्ञानगतः परिणामः कृतिः, तद्विशिष्टं च ज्ञानमेव । तदाश्रयत्वं च न ज्ञाने येन तत्कर्तृता शङ्क्येत, अपित्वात्मन एव । अतस्तस्यैव कर्तृत्वम् । नचैतावता परिणामप्रसङ्गः, ज्ञानस्वरूपस्य नित्यत्वात् कृत्यात्मना परिणामस्य तद्गतत्वात् तस्य च परिणामित्वस्येष्टत्वात् । नचैतावता ज्ञानस्य स्वरूपेणानित्यत्वप्रसङ्गः । मृदादेरिव परिणामित्वेऽपि स्वरूपनित्यत्वाविरोधात् । संकोचविकासाभ्यामनित्यत्वप्रसङ्गस्तु प्रागेव परिहृतः ॥

यदपि ' शास्त्रफल प्रयोक्तरि ' इति अध्वरमीमांसान्यायविरोध इति दूषणं, तदप्युन्मादविलसितम् । अन्तःकरणस्य कर्तृत्वमात्मनो भोक्तृत्वमिति वदता स्वेनैव तन्न्यायस्यानङ्गीकृतत्वात् । कर्तृत्वस्येव भोक्तृत्वस्यापि परिणामरूपतायाः शङ्कितुं शक्यत्वाच्च ॥ यदपि तत्स्वीकारे स्वमतप्रवेशापत्त्या महाविपत्त्याभिधानं तत्तथैव । नहि कर्मब्रह्मोभयनिष्ठानां तद्विद्वेषप्रच्छन्नबौद्धमतप्रवेशादन्या विपत्तिरस्ति ? अत एव स्वपक्षखण्डनप्रवृत्तमस्मद्भाष्यं स्वानुकूलतयोदाहरंतो महानुन्माद इत्युपहसन्ति सन्तः ॥

यदपि धर्मभूतज्ञाननिष्ठं कर्तृत्वं धर्मिण एव स्यादित्याऽक्य एव सति तद्गतपरिणामोऽप्यात्मन एव स्यादिति धर्मिण एव स्वरूपान्यथाभावः प्रसज्येतेत्युक्तं तदप्युन्मादविलसितम् । स्वमते अन्तःकरणनिष्ठकर्तृत्वस्यात्मगतत्वमादाय तद्भोक्तृत्वं व्यवस्थापयतः तव मते तद्गतपरिणामादेरात्मगतत्वप्रसङ्गात् ॥ ननु अन्तःकरणस्य पृथक्सिद्धवस्तुत्वात् न तद्गतपरिणामस्यात्मनि

प्रसगः इह तु अपृथक्सिद्धवस्तुत्वात् ज्ञानस्य तत्प्रसगो दुर्वार इति चेत् सत्यम्, तर्हि तत एव कर्तृत्वमपि तव मते आत्मनो न स्यात् । इष्टप्रसमे च भोक्तृत्वमपि न स्यात् बन्धमोक्षयोर्वैयधिकरण्य च स्यात् ॥ किं च धर्मस्य परिणामः धर्मिण एवेति वदतस्तव किमभिमतम् ? न तावत् साक्षात्तदाश्रयत्वम् । ज्ञानात्मनोर्भिन्नत्वेन तदप्रसक्तेः । ज्ञानद्वारक च तत् इष्टमेव । निर्विकारत्वोक्तिस्तु मृदादिवत् विकाराभावविषयेति प्रागेव निरूपणादिति यत्किंचिदेतत् ॥

एतेन धर्मज्ञानस्याविभुत्वाभ्युपगमात् धर्मिणोऽपि विभुत्वप्रसग इत्युन्मादविलसितम् ॥ साक्षात्तद्वत्त्वस्यापादकाभावात् परपरया तद्वत्त्वस्येष्टत्वात् । किंच नहि वय व्यसनितया ज्ञानगतावस्थाश्रयत्वमात्मनो ब्रूमः । किंतूपादानोपादेयभावग्राहकश्रुतिबलात् । नचैवं धर्मभूतज्ञानस्येवात्मनो विभुत्वं क्वचित् श्रूयते यत सद्वारकमपि विभुत्व ज्ञाने स्यात् । अन्यथा शरीरद्वारक तत्तत्कर्तृत्वमिव जडत्वमपि प्रसज्येतेत्यास्तां उन्मत्तमूर्खवराकनिराकरणप्रयत्नेन इति दिक् ॥

तस्माच्छास्त्रार्थवत्त्वाय जीवस्य कर्तृत्वमास्थेयम् । नच ‘ हन्ता चेत् ’ इति श्रुतिविरोधः । तस्य जीवानित्यत्वाभिप्रायकतया जीवकर्मकहननक्रियाकर्तृत्वमज्ञानमूलमित्युक्त्या तस्य हन्तव्यत्वासभवमात्रपरत्वात् ॥ यत्तु जीवस्य कर्तृत्वे तत्किं स्वायत्त परायत्त वा ? आद्ये परमात्मनस्सर्वस्वातन्त्र्य हानिः । द्वितीये तत्फलभोक्तृत्व परस्यैव स्यात् । राज्ञ इव भृत्यकृत शुभाशुभकर्मफलभाक्त्वमित्युक्तम् । तत्रेद वक्तव्यम्—यद्यपि जीवस्य कर्तृत्व सेवकस्येव परायत्तम् तथाऽपि न राज्ञ इव परमात्मनः तत्कृतफलभोक्तृत्वप्रसगः । तथा हि आज्ञा हि प्रेष्यप्रवृत्त्यनुकूलः प्रेषकस्य व्यापारः । स च तद्बुद्धिजन्यः । बुद्धिश्च कर्मप्रयोज्या । तथा हि ‘ बुद्धिः कर्मानुसारिणी ’ इति । तथा च यत्कर्मप्रयोज्या या प्रवृत्तिः तज्जन्य फल राजगतमेव । नहि तदाज्ञाप्रयोज्यत्वमात्रं तत्फलस्य तद्गतत्वे तन्त्रम् राजाऽऽज्ञाप्रयुक्तभृत्यताडनादिफलस्य राजगतत्वादर्शनात् । अतस्तत्कर्मैवा-

'स वा एष महानज आत्मे' ति तु परमात्मविषयकं, 'यस्यानुवित्तःप्र-
तिबुद्ध आत्मा' इति परमात्मानमधिकृत्यैव तस्याः श्रवणात् । तदाह सूत्र-
कारः—'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्' इति । 'सचानन्त्याय'
इति तु 'वालाग्रे' त्याद्युपक्रमानुरोधात् ज्ञानव्याप्त्यभिप्रायकम् ॥

अथ उत्क्रान्तिगत्यागत्यादिश्रवणविरोधात् 'तेन प्रद्योतेनैष आत्मा
निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः' इति उत्क्रा
न्तिः, 'यदैवास्मात् लोकात् प्रैति चन्द्रमसमेव ते गच्छन्ति' इति गतिः
'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' इत्यागतिश्च श्रूयते । नच वि
भोरेतास्संभवन्ति । नहि देहाद्विभागमात्रादुत्क्रान्तिः, विभोर्विभागस्यैवासं
भवात् । देहविशेषात्तद्विभागश्चेत् देहादुद्गच्छन्तीति प्रयोगस्स्यात् । भूयि
ष्ठे शाखाविभक्ते पुरुषे पुरुष उद्गच्छन्तीति प्रयोगस्य; शाखोद्गच्छतीत्यप्रयो
गस्य च प्रसंगात् । अत उद्गमनं नाम विभागानुकूलक्रियाश्रयत्व मेवोत्क्रा
न्तिः । सा च विभोः न संभवतीति अणुत्वमेव तस्य युक्तम् ॥

न च सर्वशरीरव्यापिसुखानुपलब्धिप्रसंगः । धर्मभूतज्ञानव्याप्त्यैव
तदुपपत्तेः । न च कल्पनागौरवम् । 'अविनाशी वा अरेऽयमात्माऽनु-
च्छित्तिधर्मा' 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' 'यदा न क्रियते
ज्योत्स्ना मलप्रक्षालान्मणेः । दोषप्रहाणात् न ज्ञानमात्मनः क्रियते तथा ॥'
इति श्रुतिस्मृतिभ्यां 'गुणाद्वाऽऽलोकवत्' इति सूत्रेण च सिद्धत्वात् प्रामा-
णिके वस्तुनि कल्पनागौरवानवकाशात् ॥ नच आत्माऽकार्त्स्न्यं दोषः ।
कृत्स्नस्यात्मनः सर्वशरीरेषु प्रवेशात् विभुत्ववादिनामेवायं दोषः । अपरि-
च्छिन्नस्यात्मनः परिच्छिन्नेषु शरीरेषु कृत्स्नप्रवेशाभावात् । आत्मैकदेश
संबन्धो हि आत्माकार्त्स्न्यम् । शरीरैकदेशे कृत्स्नात् कृत्स्नात्मनश्च संब-
न्धो नात्माऽकार्त्स्न्यम् आत्मगतकार्त्स्न्यापरित्यागात् ॥ ननु कृत्स्नदेशस
संबन्धः कार्त्स्न्यं, तत् परिच्छिन्नस्यात्मनो नास्तीति चेत्– कथं तर्हि वि
भुत्वपक्षेऽपि समाधानम् ? आत्मनः कृत्स्नदेशे शरीरसंबन्धाभावात् ॥

'स वा एष महानज आत्मे'ति तु परमात्मविषयकं, 'यस्यानुवित्तःप्रतिबुद्ध आत्मा' इति परमात्मानमधिकृत्यैव तस्याः श्रवणात् । तदाह सूत्रकार —'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्' इति । 'सचानन्त्याय' इति तु 'वालाग्रे' त्याद्युपक्रमानुरोधात् ज्ञानव्याप्त्यभिप्रायकम् ॥

अथ उत्क्रान्तिगत्यागत्यादिश्रवणविरोधात् 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य' इति उत्क्रान्तिः, 'यदैवास्मात् लोकात् प्रैति चन्द्रमसमेव ते गच्छन्ति' इति गतिः 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण' इत्यागतिश्च श्रूयते । नच विभावेतास्संभवन्ति । नहि देहाद्विभागमात्रादुत्क्रान्तिः, विभोर्विभागस्यैवासंभवात् । देहविशेषात्तद्विभागश्चेत् देहादुद्गच्छन्तीति प्रयोगस्स्यात् । भूयिष्ठ शाखाविभक्ते पुरुषे पुरुष उद्गच्छन्तीति प्रयोगस्य, शाखोद्गच्छतीत्यप्रयोगस्य च प्रसंगात् । अत उद्गमनं नाम विभागानुकूलक्रियाश्रयत्वमेवोत्क्रान्तिः । सा च विभो न संभवतीति अणुत्वमेव तस्य युक्तम् ॥

न च सर्वशरीरव्यापिसुखानुपलब्धिप्रसंगः । धर्मभूतज्ञानव्याप्त्यैव तदुपपत्तेः । न च कल्पनागौरवम् । 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' 'यदा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः । दोषप्रहाणात् न ज्ञानमात्मनः क्रियते तथा ॥' इति श्रुतिस्मृतिभ्यां 'गुणाद्वाऽऽलोकवत्' इति सूत्रेण च सिद्धत्वात् प्रामाणिके वस्तुनि कल्पनागौरवानवकाशात् ॥ नच आत्माऽकात्स्न्र्यं दोषः । कृत्स्नस्यात्मनः सर्वशरीरेषु प्रवेशात् विभुत्ववादिनामेवायं दोषः । अपरिच्छिन्नस्यात्मनः परिच्छिन्नेषु शरीरेषु कृत्स्नप्रवेशाभावात् । आत्मैकदेशसंबन्धो हि आत्माकात्स्न्र्यम् । शरीरैकदेशे कृत्स्नात् कृत्स्नात्मनश्च संबन्धो नात्माऽकात्स्न्र्यम् आत्मगतकात्स्न्र्यापरित्यागात् ॥ ननु कृत्स्नदेशसंबन्धः कात्स्न्र्यं, तत् परिच्छिन्नस्यात्मनो नास्तीति चेत्– कथं तर्हि विभुत्वपक्षेऽपि समाधानम् ? आत्मनः कृत्स्नदेशे शरीरसंबन्धाभावात् ॥

ननु उभयाम्संबन्धिना कृत्स्नदेशसबन्धो न विवक्षितः, अपि त्वन्यतरस्मिन्नेव । सच कृत्स्नशरीरदेशमादायापपद्यत इति चेत्--सत्यम् , तथै वाणुत्वपक्षेऽपि कृत्स्ना मदेशे शरीरसवन्धात् अकात्स्र्यं किं न पश्यसि ? 'आत्माकात्स्न्र्यम ' इति सामान्यत एव निर्देशात् ॥ किंच कात्स्र्यं हि— अवयविनामनवयाविना वा धर्मिणां निश्शेषग्रहणेन वा एकस्मिन् सावयवे निश्शेषताऽवयवग्रहणेन वा मुख्यं भवति । तच्चात्मनो. हस्तिपिपीलिकाऽऽदिशरीरप्रवेशाय अवयवोपचयापचयावगीकुर्वतो जैनस्य मते संभवति । नतु निरवयव नित्यमात्मानमभ्युपगच्छतामस्माकं मते ॥

ननु एव जैनमतेऽपि हास्तिशरीरात् पिपीलिकाशरीर प्रविशत आत्माऽकात्स्न्र्यं. पिपीलिकाशरीराद्धास्तिशरीरं प्रविशतो नात्माकात्स्न्र्यमिति आत्माकात्स्न्र्यदोष. पाक्षिकस्स्यादिति चेत्—मैवम् । शरीरपरिमाण आत्मेति जैनमते यदि पिपीलिकाशरीरपरिमाणमेव जीवस्य स्वाभाविकं तदा हास्ति हास्तिशरीर प्रविशतो जीवस्य शरीरपरिमाणाभावप्रसंग । यदि च हास्ति शरीरपरिमाणमेव स्वाभाविक, तदा पिपीलिकाशरीरं प्रविशत आत्मनोऽकात्स्न्र्यं प्रसज्येतेति उभयथाऽपि शरीरपरिमाणाभावदोष इति तन्मतस्य दुष्टत्वोपपत्तेः ॥

अत एव 'अत्र हि दूष्यं जीवस्य देहपरिमाणत्व ' मिति टीकाग्रन्थो दृश्यते । श्रीमद्भाष्य च– 'जीवोऽसंख्यातप्रदेशो देहपरिमाण इति हि भवतां स्थिति' । तत्र हस्त्यादिशरीरे स्थितस्यात्मनः ततो न्यूनपरिमाणपिपीलिकाशरीरे प्रविशताऽल्पदेशव्यापित्वेनाकात्स्न्र्यं प्राप्नोतीत्यत एव तदर्थं घटादिवत् सकोचस्वीकारे घटादिवत् अनित्यत्व विकारित्वं च स्यादिति 'नच पर्यायादप्यविरोधो विकारादिभ्यः ' इति उत्तरसूत्रेणोच्यते । अतो नात्माकात्स्न्र्यमस्मन्मते दोषः ॥

एवं च यत् केनचिदुन्मत्तेन प्रलपितम्– प्रथमाधिकरणे 'स्वयमपरिच्छिन्नमेव ज्ञान संकोचविकासार्हमुपपादयिष्याम' इत्युक्त्या आत्मनो

विभुत्वमुक्तम् । द्वितीये च उत्क्रान्तिगत्यागतिभि तदणुत्वमभिहितमिति विरोध इति तत् उन्मादविलसितमिति तावत् स्पष्टमेव । धर्मभूतज्ञानस्य विभुत्वोपपादनेऽपि आत्मनो विभुत्वानुक्ते । धर्मधर्मिणोश्चात्यन्तभेदात् । यदपि विभुत्ववतो धर्मज्ञानादात्मनोऽन्यत्वे तस्य परिच्छिन्नत्वात् आत्माकार्त्स्न्यं जैनवत् स्यादिति तदप्यत्यन्तोन्मादविलसितम् उक्तरीत्या तदप्रसक्तेः ॥ एतेन शरीरपरिमाणत्वेऽपि यत्राकार्त्स्न्यं, तर्हि सुतरां कार्त्स्न्यम् । ततश्चार्हतमतादपि निकर्षः ॥

किं च तन्मते पिपीलिकाशरीरपरिमाणस्य जीवस्य कर्मवशाद्गजादिशरीरप्राप्तौ उक्तमकार्त्स्न्यम् तव तु पिपीलिकाशरीरस्य कार्त्स्न्यमिति तदप्यतीवोन्मादविलसितमित्याविष्कृतम् । तत्रावयवापचयेन विकारित्वमेव सूत्रकारोक्तम् नाकार्त्स्न्यम् । तच्छरीरात् पिपीलिकाशरीर प्रविशतो ह्यकार्त्स्न्यमुक्त्वा अवयवापचयेन अकार्त्स्न्यपरिहारमाश्रित्य विकारित्वादिकमुक्तम् । अतः पिपीलिकाशरीरात् गजशरीरं प्रविशत कार्त्स्न्योक्तिरुन्मादविलसितैव ॥ अत एव आत्माकार्त्स्न्यं धर्मज्ञानव्याप्त्या परिहृतमित्याशंक्य धर्मज्ञानस्यानात्मत्वात् तथाऽपि नात्माकार्त्स्न्यनिवारणमिति ज्ञानाकार्त्स्न्यवारणमुन्माद इति दूषणमप्युन्मादविलसितमेव । ज्ञानाकार्त्स्न्यपरिहारानभिधानात् आत्माकार्त्स्न्याप्रसक्तेरुपपादितत्वाच्च ज्ञातम् ॥ एतेनैवैतत्परिहाराय धर्मज्ञानस्य आत्मत्वस्वीकारे अणुत्वविभुत्वयोर्विरोध । धर्मधर्मिणोर्द्वयोरात्मत्वङ्गीकारेऽपि आत्माकार्त्स्न्यं दुर्वारमेव धर्मिणोऽप्यात्मत्वात् । तर्हि सर्वाङ्गीणसुखदुःखाद्युपलब्धि धर्मस्यैव नतु धर्मिण इति अणोर्जीवस्य जगदान्ध्य स्यादित्यादिप्रलपनमपि अकाण्डताण्डवित मूलाशुद्धया न शुद्धमिति अलमनेनोन्मत्तजनसंभाषणदोषेणेति दिक् ॥

इति श्रीशैलश्रीनिवासकृते विरोधनिरोधे

॥ षष्ठो निरोधः ॥



# अथ सप्तमो निरोधः

अनेनैव प्रकारेण निरस्तेऽप्युत्तरोदिते ।
विरोधेऽपि तदुन्मादप्रकाशायेदमुच्यते ॥

धर्मभूतज्ञानस्यानात्मत्व तावदस्मादिष्टम । तत्रात्मत्वमारोप्य दूषण तावदुन्मादविलसितम् । तथाहि धर्मज्ञानस्यानात्वे आत्माकात्स्न्र्यप्रसगो दुर्वार इति तत्रात्मत्वमकामेनापि स्वीकर्तव्यमिति पूर्वत्र स्थितम् ॥ एवचात्माकात्स्न्र्येन् ' ' नच पर्यायादप्यविरोधो विकारादिभ्य अन्त्यावस्थितेश्चोभयनित्यत्वादविशेष. इति सूत्रत्रयेण शरीरपरिमाण आत्मेति जैनपक्षं दूषयित्वा धर्मभूतज्ञानस्य आत्मन शरीरपरिमाणत्वं व्यवस्थापितमिति विरोधो दुष्परिहरः ॥

न च विभुत्वमेव तस्यांगीकृत, न शरीरपरिमाणत्वमिति वाच्यम् । कर्मणा तस्य सकोचमगीकुर्वता कृत्स्नशरीरगतसुखाद्युपलब्धिसभवाय शरीरपरिमाणस्यैव अगीकर्तव्यत्वात् । अन्यथा सर्वजीवसंबन्धिनां ज्ञानानां विभुत्वात् सर्वेषां भोगसकरप्रसगः । न च कर्मवशात् व्यवस्था । ' अदृष्टानियमात् ' इति सूत्रकारैः तादृशव्यवस्थायाः निराकृतत्वात् । अथ कर्मकृत शरीरपरिमाणत्व न स्वाभाविकमिति चेत्— किंचातः ? जैनमतेऽपि तस्य तथात्वात् । तन्मते तस्याकर्मकृतत्वे त्वन्मतेऽपि तथात्वस्य वक्तुं शक्यत्वात् । अन्यथा मुक्तौ कर्मनिवृत्ते. शरीरपरिमाणत्वनिवृत्तौ सर्वजीव ज्ञानानां विभुत्वात् सर्वेषां भोगसंकरो दुर्वारस्स्यात् ॥

एवं जीवानामीश्वरस्य च भोगसकरस्स्यात । ' सभोगप्राप्तिरितिचेन्न वैशेष्या ' इत्यत्र हि कर्मतदभवाभ्यां जीवेश्वरयो भोगासकर उक्तः स प्रति कथ व्यवस्था ? नच इच्छातस्तद्व्यवस्थेति व्यवस्था युक्ता । ' अदृष्टानियमात ' इत्युक्त्वा ' अभिसन्ध्यादिष्वपि चैवम् ' इति तन्नियामकत्वस्यापि दूषणात् । अतो भोगसांकर्यवारणाय मुक्तौ तस्य शरीरपरिमाणत्व ज्ञानस्यांगीकार्यमिति तस्य स्वाभाविकत्वे तस्यैवात्मत्वात आत्मनश्श

रीरपरिमाणत्वं दुर्वारमिति । तदेतत्सर्वमुन्मादविलसितमिति स्पष्टमेव । धर्मज्ञानस्यानात्मत्वोपपादनात् । तथाऽप्यात्माकात्स्न्र्यप्रसक्तिपरिहाराच्च । ज्ञान विभुत्वं तु ' सचानन्त्याय कल्पते ' ' सर्वं ह पश्य पश्यति ' ' तेषामा दित्यवज्ज्ञानं प्रकाशयति ' इत्यादिप्रमाणसिद्धम् । मुक्तावस्थायामपि दर्शनात् स्वाभाविकम् । तत्सङ्कोचस्तु कर्माधीन इत्यौपचारिकः । ' अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । तया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा ॥ ' इति ज्ञानविभुत्वं कर्मणा तदावरणं चोक्त्वा,' तया तिरोहि तत्वाच्च शक्तिः क्षेत्रज्ञसंहिता । सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥ ' इत्यनेन तत्तारतम्याभिधानात् । सङ्कोचश्च मुक्तिकालीनानन्तविषयत्वप्रतिद्वन्द्व्यल्पविषयत्वमेव , नत्वयवापचयः । विकासोऽपि सर्वविषयत्वम् नावयवोपचयः , निरवयवत्वात्तस्य । अतो नानित्यत्वप्रसंग इत्युक्तम् ॥

तारतम्यमपि न्यूनाधिकविषयत्वमेव । तस्य शरीरपरिमाणत्वेतु नास्ति प्रमाणम् नचास्ति कल्पकम् । सर्वाङ्गीणसुखोपलब्धेरधिकव्याप्त्याऽप्युपपत्तेः ॥

नच शरीराधिकपरिमाणत्वे भोगसंकरप्रसंगः । प्रतिशरीरमात्मनां भिन्नत्वेन सुखदुःखानुभवरूपभोगस्य शरीरावच्छेदेनैव जननेन तत्तत्कर्मजन्यत्वेन तत्कर्मजन्यशरीरावच्छेदेन जायमानस्य भोगस्य तन्मात्रानुभाव्यतया सांकर्यशंकाऽनुत्थानस्य ' संभोगप्राप्तिरिति चेन्न वैशेष्या ' दिति न्यायेनैव अर्थसिद्धत्वात् ॥ अन्यथा आत्मविभुत्ववादिनामपि अयं दोषो दुर्वारः । तद्विषयानुभवरूपस्य भोगस्य कर्मकृततरतमभावांगीकारेण ममापि तुल्यत्वात् ॥

यत्तु कर्मकृतव्यवस्था अदृष्टानियमा ' दिति सूत्रकृतैव निरस्तेति कल्पनं, तदुन्मादविलसितम् । ' सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ' इत्यत्र कर्मकृतव्यवस्थामुक्तवतस्सूत्रकृतः पुनरिह तन्निराकरणानौचित्यात् । सूत्रं तु भाष्य एव अन्यथा व्याख्यातम् । तत्र हि—ब्रह्मांशत्वं जीवस्योक्त्वा तस्य ब्रह्मवदेव विभुत्वाद्भोगसांकर्यमाशङ्क्य ' असन्ततेश्चाव्यतिकर ' इत्यनेनोक्त

प्रकारेण जीवस्य असन्ततेः– अविभुत्वात् अनुत्पादत एव प्रतिशरीरं भिन्न न भोगसांकर्यमिति विभुत्वपक्षे भोगसांकर्यशंकां स्थिरीकृत्य अविद्याकल्पितोपाधिभेदात् भोगासांकर्यमाशक्य तस्याभासत्व 'आभासा एव च' इत्यनेनोक्त्वा तत्तदुपाधिहेत्वदृष्टभेदात् अविद्योपाधिकल्पितजीवभावस्य विभोरपि न सांकर्यमित्याशक्य अदृष्टस्याप्येकब्रह्माश्रितत्वादनियामकत्वम त एव तद्धेत्वभिसन्ध्यादीनामप्यनियामकतेति 'अदृष्टानियमात्' अभिसन्ध्यादिष्वपि चैवम्' इति द्वाभ्यां सूत्राभ्यां उक्तम् । ननु तत्राणुजीवपक्षे प्रतिशरीराभेद इति पक्षे च कर्मणामव्यवस्थापकता उक्ता । अतः तद्विरोधो किरुन्माद एव ॥

यदपि कर्मकृतव्यवस्थापक्षे मुक्तौ तदभवादव्यवस्था स्यादित्युक्त तदपि अज्ञानादेव । तत्तन्मुक्तभोगानां तत्संकल्पमात्रायत्तत्वेन भोगसांकर्याभावस्य 'सकल्पादेव तासिद्धेः' इति न्यायसिद्धत्वात् ॥ 'सपद्याविर्भावं' इत्यत्राप्यपहतपाप्मत्वाद्यष्टगुणाविर्भावोक्त्या सत्यसकल्पत्व भगवत इव मुक्तादावप्यस्ति अतः तदधीनैव व्यवस्था । यथोक्तं भाष्ये– अमुक्तानां कर्म व्यवस्थापकम् मुक्तानां तु स्वेच्छैवे' ति ॥ — यत्त्वत्र 'अभिसन्ध्यादिष्वपि चैवम्' इति इच्छाया अनियामकत्वोक्ते अयुक्तत्वकथन, तत्त्वविद्योपाध्यवच्छिन्नब्रह्मजीवत्वादे. आत्मन एकत्वात् अदृष्टानामिव इच्छानामप्येकात्मनिष्ठत्वात् नियामकत्वेऽपि भिन्नात्मवादे तत्तदिच्छानां तत्तदात्मनिष्ठानां नियामकत्वसभवान्नतद्दूषणप्रसग इति निरस्तमेव । ततश्च—

कुरूपमुखदोषाणां दर्पणेष्वर्पण यथा ।
अणुत्वपक्षे दोषोक्तिः तथाऽपि स्वात्मवादिनः ॥

ततश्च— अविद्यामादिरापानमदमत्तस्य जल्पतः ।
प्रत्युक्तिरपि लज्जायै भविता केवलं सताम् ॥

तथाहि– ब्रह्मैव अविद्याप्रतिबिंबितमन्तःकरणप्रतिबिंबित वा जीवः । सच्च विभुः स्वातिरिक्तज्ञानशून्य इति हि तव मतम् । तत्र विभुत्वादात्मनः सर्वशरीरारव्यापित्वाद्भोगसांकर्यं दुर्वारम् । अदृष्टाभिसन्ध्योरव्यवस्थापकतायाः

त्वयैवोक्तत्वात् । एकस्वरूपगतानां तेषां व्यवस्थापकत्वानुक्तेश्च ॥ नचास्माकमिव कर्मतारतम्यात् व्यवस्था । ब्रह्मण एवाविद्योपाधिवशात् जीवभावमंगीकुर्वतां तदसंभवात् । एकत्वात्तस्या विभिन्नेषु शरीरेषु कथं व्यवस्था? विभुत्वेन सर्वेषां सर्वशरीरव्याप्त्यविशेषात् । नच व्यक्तिभेदेन निर्वाहः । ध्रुवारुन्धत्यादिविषयदेशव्यापिकाया अपि वृत्ते सर्वविषयसंबन्धित्वाविशेषादित्यन्यत्र विस्तरः ॥

धर्मज्ञानस्य शरीरपरिमाणत्वे वा किमिष्टं तव सिद्ध्येत्? तस्यात्मत्वानङ्गीकारेण तत्प्रयुक्तजैनसांकर्याभिधानस्य जैनकपोलजलकणिकास्वादनलुब्धस्य स्वकीयप्रच्छन्नबौद्धताप्रकाशनार्थत्वेन अस्मान्प्रत्यविरोधित्वात् । किंच त्वन्मतेऽप्यन्तःकरणावच्छिन्नः तत्प्रतिबिंबो वा जीव इति पक्षे अन्तःकरणस्य शरीरपरिणामत्वे जैनसांकर्यं दुर्वारम् । प्रतिबिंबस्य तदधिकरणादधिकपरिमाणत्वायोगात् । मणिकृपाणदर्पणादिषु तथैव दृष्टत्वादिति यत्किञ्चिदेतत् ॥

इति श्रीशैलश्रीनिवासविरचिते विरोधनिरोधे

॥ सप्तमो विरोधोद्धारः ॥



## अथ अष्टमो निरोधः

आविर्भूतस्वरूपोऽसौ अप्राकृततनुः पुमान् ।
यत्कृपावशतो भुङ्क्ते भोगान् विष्णुं नमामि तम् ॥

ननु किमिदं मुक्तस्याविर्भूतस्वरूपत्वं नाम? यदि स्वरूपप्रकाशस्तदा नासौ मोक्षः । नित्यस्वप्रकाशस्यात्मनः सर्वदा प्रकाशमानत्वात् नहि प्राक्सिद्धं भवति । नित्याविर्भूतस्वरूपस्य आविर्भावान्तरोक्तिश्च न युक्ता । स्वरूपाविर्भाव एव मुक्तित्वे मुक्तिसुषुप्त्योरविशेषप्रसङ्गश्च । तत्रापि स्वरूपाविर्भावाविशेषात् । अथ देहादिवद्देहविशेषपरिग्रह एव आगन्तुकाविर्भावः

'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति रूपशब्दश्रवणात्। मैवम्। देवादिशरीराणां कर्मकृतानां संभवेऽपि कर्मसामान्यशून्यस्य मुक्तस्य आगन्तुकशरीरवत्त्वासंभवात्। अन्यथा तत्कृतप्रियाप्रियापहतिप्रसङ्गात्। तथा च श्रुतिः 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति अथ यथा नित्यमुक्तस्यापि भगवतः रामकृष्णाद्यप्राकृतागन्तुकविग्रहपरिग्रहः तथा सर्वकर्मनिर्मुक्तस्यापि पुरुषस्य अप्राकृतरूपविशेषपरिग्रहः 'स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतिबलादास्थीयतामिति चेत्— न, तथा सति स्वेनेत्यस्य वैयर्थ्यापत्तेः। नह्यन्यस्य शरीरमन्यस्य रूपं भवति। येन तद्व्यावृत्तये स्वेनेति विशेषणमर्थवत् स्यात्। अतो रूपशब्दः स्वरूपपर एव वाच्यः। तथा च तस्य प्रागपि सत्वात् तस्याविर्भावोक्तिरयुक्तेति चेत्—उच्यते रूपशब्दः आकारपरः। स्वशब्दस्त्वसाधारण्यवाची तथा च स्वासाधारणेन स्वाभाविकेनेति यावत्। रूपेण — 'एष आत्माऽपहतपाप्मा विजरो विजिघत्सोऽपिपासः सत्यकामस्सत्यसंकल्पः' इति प्रजापतिविद्यावाक्योक्तेन आकारेण अभिनिष्पद्यते— अभिव्यक्तो भवतीत्यर्थः। प्रजापतिवाक्यं च मुक्तजीवपरमिति 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इत्यनेन दहराधिकरणे सूत्रकारेण कण्ठरवेणोक्तम्॥

ननु अपहतपाप्मत्वाद्याकारः यदि स्वाभाविकः तदा तस्य प्रागपि सत्वात् अभिनिष्पद्यते इत्यभिधानं न युज्यत इति ब्रूमः। यथाहि स्वतः शुद्धोऽपि पुरुषः स्पर्शादिभिरशुद्धः स्नानादिभिः शुद्धोऽभिनिष्पद्यत इत्युच्यते। व्रीह्यादिकं च स्वरूपतश्शुद्धमपि दृष्टादृष्टफलकैरवघातप्रोक्षणादिभिः तत्तत्फलवैशिष्ट्येन साध्यमिति व्यवह्रियते एवं कर्मभिरशुद्धो जीवः तत्तत्संबन्धविनिर्मोकेण ब्रह्मानुभवसंबन्धरूपफलेन च विशिष्य साध्य इति अभिनिष्पत्तिवचनस्याविरोधः॥ ननु ब्रह्मानुभवः उपासनादशायामप्यस्तीति न तद्वैशिष्ट्यं साध्यतागमकमिति चेत्— सत्यम्, यावदेव हि उपासनादशायां न तावदेव ब्रह्म उपासनेन मुक्तावनुभूयत इति अस्ति नियमः 'यच्चास्ते यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' 'सर्वं ह

पश्यः पश्यति सर्वमाप्नोति सर्वशः ' ' सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ' ' निरञ्जनः परमं साम्यमुपैति ' ' स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य ' ' इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ' ' भोगमात्रसाम्यलिंगाच्च ' इत्यादिश्रुतिस्मृतिसूत्राविरोधात् । श्रवणमनननिदिध्यासनेषु उत्तरोत्तराधिक्यविषयकानुभवाविरोधाच्च । निरूपित चेदं मुक्तिदर्पणे तारतम्यप्रस्तावे । अतोऽत्राप्यपहतपाप्मत्वादिगुणाष्टकाविशिष्टस्वरूपे सत्यपि समाध्यवस्थाऽवलंबिनियमं सकलमपि साध्यं मुक्तिकालीननिखिलपरिजनपरिच्छदसहकृतभगवदनुभवसुखासिन्धौ पृषतलवायत इति तद्वैशिष्ट्येन साध्यता न विरुद्धा ॥

अत एव स्वरूपाविर्भावमात्रस्यापुरुषार्थत्वात् मुक्तेरपुरुषार्थत्वशंकाऽपि दूरोत्सारिता । आनन्दात्मकजीवस्वरूपाविर्भावस्याप्यानन्दगर्भतया पुरुषार्थत्वाच्च । यथोक्तम्—' ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मनः ' इति किं च ' सचानन्त्याय कल्पते ' ' तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ' इत्यादिश्रुतिस्मृतिभिः ' प्रदीपवदावेशस्तथा हि दर्शयति ' इत्यादिसूत्रकारोक्त्या च मुक्तिदशायां निश्शेषकर्मनिर्मोकात् असंकुचितज्ञानप्रसारोऽवगम्यते । सचागन्तुक इति तद्वैशिष्ट्येन स्वरूपाविर्भावो न विरुद्धः ॥

किंच सांकल्पिकपित्रादिसंसर्गः तत्तत्प्रयत्नानुभवः । ' स यदि पितृलोककामो भवति संकल्पादेवास्य पितरस्समुत्तिष्ठन्ति ..स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा—इमान् लोकान्कामान्नी कामरूप्यनुसचरन् , ' तेषां सर्वेषु लोकेषु कामचारो भवति ' इत्यादि श्रूयते । तच्च नोपासनादशायां प्राग्वा कदाचिदपि सिद्धम् । अतस्तद्वैशिष्ट्येनाविर्भावो न विरुद्धः ॥

ननु मुक्तस्य देवादिवत् न शरीरविशिष्टत्वेनाविर्भावः निष्कर्मत्वात् तस्य । नाप्यकर्मकृतशरीरवैशिष्ट्येन भगवत इव । ' स्वेन रूपेण ' इत्यत्र स्वशब्दावरोधादित्युक्तम् । मुक्तस्याशरीरत्वं चोच्यते ' अशरीरं वावसन्तं

न ष्टियाप्रिये स्पृशतः ’ इति इदानीं कामचारो अस्तीति सूच्यते । स च न अशरीरस्य । तदिदं विप्रतिषिद्धं कथमुपपद्यते ? इत्थमुपपद्यते नहि मुक्तस्य शरीरमेव नास्तीत्युच्यते । ‘ स एकधा भवति त्रिधा भवति ’ इत्यादिभिः अनेकधाभावस्य शरीरद्वारकस्याभिधानेन आगन्तुकशरीराणां सांकल्पिकाना मप्यवश्यभावात् । अशरीरस्य अणोर्जीवस्य निरवयवस्य शरीरसबन्धं विना बहुभावायोगात् । अशरीरत्वश्रुतिस्तु कर्मकृतशरीराभिप्राया । एवं सत्येव हि श्रुत्योरविरोधः । ‘ स्वेनाविर्भाव ’ इत्यत्र तु कर्मभिर्देवादिभावापन्नदेह विशिष्टतयाऽऽविर्भाव इत्याविर्भवनकालावच्छेदेनाशरीरत्वमुच्यते नतु तदुत्तरकालावच्छेदेनापि । तथा च भाष्यम्— ‘ अय प्रत्यगात्मा अर्चिरादिना परं ज्योतिरुपसपद्य यं दशाविशेषमापद्यते स. स्वरूपाविर्भाव एव नापूर्वाकारोत्पत्तिरूपः । कुतः ‘ स्वेनशब्दात् । स्वेन रूपेणेति विशेषणोपादानादित्यर्थः आगन्तुकदेहपरिग्रहे हि स्वेन रूपेणेति विशेषणमनर्थकं स्यात् । अविशेषणेऽपि तस्य स्वकीयरूपत्वासिद्धेः ’ इति । अत्र विशेषणोपादानसामर्थ्यादाविर्भावकालावच्छेदेन देवादिवच्छरीराभाव एवोक्त. नोत्तरसर्वकालावच्छेदेनापि ॥ एवं च तदेव भाष्यमुत्तरसर्वकालावच्छेदेन शरीराभावपरमिति भ्राम्यत उन्मत्तस्य कस्यचिद्विरोधोद्भावनमित्थम् । मुक्तावागन्तुकदेहपरिग्रहाभावं प्रतिज्ञाय ‘ अभावं बादरिराह ह्येवम् ’ इत्यत्र किं मुक्तस्य देहेन्द्रियाणि सन्ति उत नेति संशय्य बादरिमते अभावमुक्त्वा ‘ भावं जैमिनिर्विकल्पामननात् ’ इति जैमिनिमते सद्भावमुक्त्वा द्वादशाहवदविरोधं बादरायणोऽतः ’ इत्यत्र यथा द्वादशाहस्य संकल्पभेदेन अहीनत्वं सत्रत्वं च तथा मुक्तस्यापि संकल्पवशात् देहादीनां सद्भावश्चासद्भावश्चोक्तः । इत्थं मुक्तावागन्तुकदेहाभावस्य क्वचिदुक्ते अन्यत्र तत्सद्भाववचनस्य च विरोध इति तद्बोधविलसितमेति तावत्स्पष्टमेव । अत्र देहादिसद्भावस्य सांकल्पिकत्वाभिधानेऽपि आविर्भावस्य देवादिवच्छरीरविशेषावच्छिन्नत्वस्य प्राक् निषिद्धस्येहानभिधानेन विरोधाप्रसक्तेः ॥

बादरिणा हि ‘ अशरीरं वा वासन्तम् ’ इति श्रुतेः सर्वविधशरीरसबन्धाभावपरत्वमभिमन्यमानेन जैमिनिना प्राकृताप्राकृतदेहसबन्धाभावे कथिते

तस्य कर्मकृतेः संसारस्याभावरूपतया अन्यथानिर्देशं मन्यमानेन जैमिनिना 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुतिस्वारस्यमनुरुध्य 'स्वेन रूपेणाभिनिष्पद्यते' इत्यनेनैव शरीरविशिष्ट एवाविर्भाव इत्यभिहिते स्वशब्दस्वारस्यानुसन्धाने श्रुतिद्वयप्रामाण्यात् सांकल्पिकत्वाच्च शरीराणां संकल्पस्य च अनियतत्वात् अशरीरस्याविर्भूतस्वरूपस्य पित्रादिसर्गवत् कादाचित्को देहसंबन्धः नसार्वदिकः भावोऽभावो वेति भगवता बादरायणेन राद्धान्तितम् ॥ भाष्येऽपि तदेवोपपादितम् कुतस्तत्र विरोधगन्धः ॥

बादरिमते हि 'स एकधा भवति' इत्यादेः न विषयत्वम् । सकल्पवत् सर्वसृष्टिकामचारादिश्रुतेः सकुचितान्यविषयत्वाभ्यामस्वारस्य च ॥ जैमिनिमते स्वेनेत्युक्तेरस्वारस्यम् । तदेतत् स्वेन शब्दादितिवत् 'भावं जैमिनिर्विकल्पामननात्' इत्यादि वदता सूत्रकृतैव दर्शितम् । अत पित्रादिसर्गसंकल्पवत् शरीरादिसर्गसंकल्पोऽपि कादाचित्क एव । स्वरूपाविर्भावस्त्वशरीरस्यैवेति सूत्रभाष्याभिमते न कश्चिद्विरोधशङ्काप्रसरः ॥

यश्चात्र यथा द्वादशस्य सकल्पवशात् अहीनत्व सत्रत्व चेत्यनुवादः सोऽप्यज्ञानादेव । इत्थं हि तत्र भाष्यम्— 'यथा द्वादशाहो द्वादशाहमृद्धिकामा उपेयुः' 'द्वादशाहेन प्रजाकामं याजयेत्' इति उपैतियजति चोदनाभ्यां सकल्पभेदेन सत्रमहीन च भवति अत्रचोपैतिचोदनाभ्यां सत्रमहीनं चेत्युभयरूपतामापन्नो द्वादशाह इत्यन्वय । सकल्पभेदेनेत्यस्य तु भवतीत्यनेनैवान्वयः । तथाचायमर्थः । उपैतियजतिचोदनाभ्यां सत्रत्वमहीनत्व च प्राप्नुवत् द्वादशाह तथैव सकल्पभेदेनाप्यनुष्ठातव्या भवति इति तथा च श्रुतप्रकाशिका—

'सत्रत्वेऽहीनत्वे च प्रामाणिके सति तत्प्रयोगविशेषेषु सकल्पभेदो नियामक इत्यर्थः' इति ॥ एतदुक्तं भवति । यथा द्वादशाहस्य विधायकचोदनागतोपैतियजतिशब्दाभ्यां सत्रत्वाहीनत्वयोः प्रामाणिकत्वे सति तयो

स्नुष्ठाने सकल्पो नियामकः तथा 'स एकधा भवति स त्रिधा भवति स पञ्चधा सप्तधा' इति 'स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतिगताभ्यां त्रेधाऽऽदिशब्दस्वशब्दाभ्यां सशरीरत्वेऽशरीरत्वे च प्रामाणिके सति सत्यसकल्पस्य मुक्तस्य संकल्पभेदात् शरीरपरिग्रह तदपरिग्रहश्च न विरुद्ध इति ॥ एवं स्थिते सकल्पवशात् अहीनत्व सत्रत्व चेत्यनुवादः तदर्थापरिज्ञानादेवेत्युन्मादावस्था स्फुटीकृता ॥

एतेन नचेन्द्रियादीनां स्वरूपत्व वक्तु युक्तम् संकल्पजन्यत्वात् । संकल्पस्य च 'कामस्सकल्पः' इत्यादिना मनोवृत्तिरूपत्वावगमात् । 'अन्नमय हि सोम्य मन' इति मनसो भौतिकत्वात् मन परिमाणमजसंकल्पजन्यस्यात्मत्वे शरीरात्मनोरभेदप्रसगात् ; नच सूत्रकारैणैवोक्तोऽय विरोध इति शंक्यम् । सूत्रकारेण मुक्तात्मस्वरूपाविर्भावस्यैवोक्तेः । सगुणविद्याफले मुक्त्याभासे तु आगन्तुकदेहसबन्ध उक्तः । तस्मात्तवैवाय विरोधः । ननु कर्मजन्य एव शरीरपरिग्रहो निरस्त न सांकल्पिक इति चेत्– न ; उभयोरप्यागन्तुकत्वाविशेषात् । आगन्तुकदेहपरिग्रहाभावमात्रस्यैव स्वरूप विर्भावपदेन प्रतिज्ञातत्वात् । तस्यात्मत्व लोकायतिकमतप्रवेश इत्यपि भ्रममूलमिति व्यक्तमेव । इन्द्रियादीनां स्वरूपत्वाशका च स्वकीयप्रच्छन्नबौद्धत्वप्रदर्शनायैव । अनभिमतार्थापादनरूपत्वात् । सकल्पजन्यत्वादिति हेतूक्तिश्चायुक्ता । श्रौते शरीरात्मनोर्विवेकजन्यत्वादेरहेतुत्वात् । संकल्पस्य मनोवृत्तिरूपत्वोक्तिश्चासबद्धा । बुद्धिविशेषरूपस्य आत्मधर्मत्वात् । 'कामस्संकल्पः–' इत्यादेश्च 'आयुर्घृतम्' इत्यादिवत् प्रयोज्यप्रयोजकभावप्रयुक्ताभेदव्यपदेशपरत्वात् । 'अन्नमय हि सोम्य मनः' इति मनसो भौतिकत्वोक्तिश्च असबद्धा आहकारिकत्वादिन्द्रियाणाम् । उदाहृतश्रुतेस्त्वाप्यायकत्वाभिप्रायिकेत्युपपादितम् । तत्वमार्ताण्डे सांकल्पिकशरीरादसद्भावे सूत्रस्वारस्य चोपपादितम् ॥ यत्तु सगुणविद्याफलमुक्त्याभासविषय तदिति उक्त तत् पाण्डिताभासस्य वचनमुपहास्यम् । सर्वासामपि विद्यानां सगुणविषयकतायाः गुणोपसहारपादे सूत्रकारैरेवोपपादनेन निर्गुणस्य ब्रह्मणः तदुपासनायाश्च शशविषाणप्रायत्वात् ॥

'कारण तु ध्येय' इति कारणस्यैव ध्येयतया सगुणस्यैव कारणतया निर्गुणस्य ध्येयताऽनुपपत्तेश्च ॥ 'सपद्याविर्भावः' इत्यत्र आगन्तुकदेहसंबन्धाभाव तत्कालावच्छिन्न एव निरूपित नोत्तरकालावच्छिन्न । अतो न कश्चिद्विरोध इति दिक् ॥

इति श्रीशैलश्रीनिवासविरचित विरोधनिरोधे
॥ अष्टमो विरोधोद्धार· ॥



## अथ नवमो निरोधः

कर्माभावेऽपि संकल्पादप्राकृतसुखादिकम् ।
मुक्तो यत्कृपया भुङ्क्ते त विष्णु प्रणमाम्यहम् ॥

ननु मुक्तिकालीनानां स्रक्चन्दनवनितान्नपानादिरूपाणां भोग्यवस्तूनामुत्पत्ति· न विना कारणेन भवितुमर्हति । तत्कारण च न सकल्पमात्रम्, प्रतिक्षणमुत्पत्तिमतां संकल्पानामपि विना कारणेन जननासभवात् । ननु ईश्वरप्रसादस्तत्कारणमिति चेत्— सोऽपि निष्कारणस्सकारणो वा ? आद्ये सर्वमोक्षप्रसगः । द्वितीये तत्कारणमुपास नमन्यद्वा ? नान्य, अनुपलब्धे· । 'यो मद्भक्त स मे प्रिय·' इत्यादिप्रमाणविरोधश्च । आद्ये चोपासन मानस कर्मेति मुक्तावपि तदनुवृत्तौ कुतो निरशेषकर्मक्षय· ? किंच कर्मणां निरशेषक्षयोऽपि न भगवत्प्रसादात् उक्तविकल्पग्रासात् । नाप्युपासनेन स्वस्यापि कर्मत्वात् । नापि सकल्पेन, सर्वकर्मक्षयेऽस्ति स्वरूपाविर्भावात्तत्सिद्धि· तत्सिद्धौ च कर्मक्षय इत्यन्योन्याश्रयणम् । अथोपासनया प्राचीनसर्वकर्मक्षय इत्युच्येत । नासौ निरशेषकर्मक्षय इति प्रत्युच्येत ॥

किंचैव निमित्तापायन्यायेन स्थूलसूक्ष्मशरीरस्यापि तथैव नाशे ब्रह्मलोकगमनमपि नोपपद्येत । तदर्थं कर्मानुवृत्तिस्वीकारे च नाशकाभावात्

मुक्तावपि सा दुर्वारा स्यादिति चेत्— उच्यते । नोपासनं क्रियारूपम् । येन तदनुवृत्त्या निश्शेषकर्मक्षयो नेति शङ्काऽपि स्यात् । किंतु ज्ञानरूपं वि द्युपास्योः व्यतिकरेण निर्देशनादिति भाष्यतट्टीकयोः स्पष्टम् । उपपादितं च अस्माभिः 'ज्ञानरत्नदर्पणे' । अतो वेदनोपासनध्यानभक्त्यादिपदानामेकमोक्षोपायपराणां एकार्थत्वावश्यंभावात् । उपासनं ज्ञानरूपमिति न तदनुवर्तनात् कर्मसद्भावः मुक्तावापादयितुं शक्यः । ज्ञानस्य सिद्धत्वेऽपि वेदान्तश्रवणमननादिप्रणाडिजन्यसंस्कारविशेषसहकृतेन मनसा जायमानावस्थाविशेषसहकृतं तदेवोपासनरूपं मोक्षहेतुश्चेति न किंचिदनुपपन्नम् ॥

अस्तु वा उपासनं मानसव्यापाररूपमेव किं तेन स्यात् ? मुक्तौ निश्शेषकर्मक्षयाभाव इति चेत्— नहि मुक्तौ व्यापारमात्रोपरमः प्रमाणप्रतिपन्नः ? अपि तु पुण्यपापरूपकर्मण एव । 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति सुकृतदुष्कृतयोरेव निवृत्तिश्रवणात् । 'जीर्यन्ते चास्य कर्माणि' इत्यपि तत्परमेव । 'अविद्या कर्मसंज्ञाऽन्या' इति विद्याविरोधिन एव कर्मणो निवर्तनीयत्वात् । नह्यविरोधिनोऽपि निवृत्तिकल्पनं प्रामाणिकम् ? लोकक्रमाचारादिश्रुतिविरोधेन तत्कल्पनानुन्मेषाच्च । तत्कल्पनेऽपि वा किमनिष्टं स्यात् ? मुक्तौ तदनुवृत्त्या निश्शेषकर्मक्षयासिद्धिरिति चेत्— कुतस्तदनुवृत्तिः मुक्तौ । नहि फलसाधनयोस्सहावस्थाननियमोऽस्ति ? येन तदनुवृत्तिरावश्यिकी स्यात् । पूर्ववृत्तित्वमात्रं हि तस्यापेक्षितम् । कर्मणां फलनाश्यत्वं च नियतं आशुविनाशित्वं च । फलसिद्धिस्तु ज्योतिष्टोमादेरिव देवताप्रसादद्वाराऽपि भवति न तदर्थं मुक्त्युपासनानुवृत्तिकल्पनम् ॥

अत एव प्रसादे सन्तानस्यापि साधनसापेक्षत्वात् तदर्थमप्युपासनानुवृत्तिकल्पना न युक्ता । ज्योतिष्टोमादिजन्यदेवताप्रसादेऽपि सान्तानिके पुनःपुनः परलोकेऽपि ज्योतिष्टोमानुष्ठानकल्पनाप्रसङ्गात् । यदि च यावज्जीवादिश्रुतिभिः जीवनकालावच्छिन्नतदनुष्ठानप्रीताभिर्देवताभिः युगपदेव तावत्कालभाव्यं फलं दीयत इति न पुनः पुनः कर्मानुष्ठानापेक्षा । तर्हि इहापि

'प्रायणान्तमोङ्कारमभिध्यायीत' 'आप्रयाणात्तत्रापि हि दृष्टम्' 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इत्यादिप्रमाणशतात् अपुनरावृत्तिविधिसहकृतात् उपासनाप्रीतभगवत्प्रदत्तमानन्दं यावत्कालमनुभवतीति कल्पनात् न पुनरुपासनाऽपेक्षा । यथा हि लौकिकोऽपि राजा कदाचित्कृतसेवया प्रीतः यावत्कालमनुभाव्यान् भोगान् युगपदेव दास्यतीति प्रसिद्धम् तदा किमु वक्तव्यमपारसौशील्यवात्सल्यौदार्यमहोदधिर्भगवान् न पुनः प्रार्थनीयान् भोगान् दास्यतीति । अत पुनःपुनः प्रसादोत्पत्तिसिद्धये कारणान्तरापेक्षेति उन्मत्तवचनमश्राव्यम् ॥

किंच स्वरूपाविर्भावे सत्यसंकल्पत्वमन्तर्भूतम् । तच्चाप्रतिहतेच्छावत्त्वम् । तच्च ज्ञानावस्थाविशेष इत्युक्तम् । स एव च तत्कालीनपित्रादिसर्गे कारणमिति न तदर्थं कर्मापेक्षा । स्वरूपाविर्भावमोक्षान्तर्गतसत्यसंकल्पत्वस्य कर्मजन्यत्वोक्तेरुन्मत्तप्रलापत्वात् । विद्याया एव तन्निमित्तत्वात् । 'विद्ययाऽमृतमश्नुते' इति हि श्रूयते । स्मर्यते च 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति ॥ यत्तु निश्शेषकर्मक्षये सूक्ष्मशरीरस्यापि नाशाद्गमनं नोपपद्यत इति तत् सूत्रकारैरेव परिहृतम्— 'उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्' इति । अत्र भाष्यम्— 'उपपन्न एव उत्क्रान्तिकाले सर्वकर्मक्षयः । कथम् ? तल्लक्षणार्थोपलब्धेः । क्षीणकर्मणोऽप्याविर्भूतस्वरूपस्य देहसंबन्धलक्षणार्थोपलब्धेः । 'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षत्क्रीडन्रममाणः—स स्वराड्भवति । तस्य सर्वेषु लोकेषु कामचारो भवति ।' 'स एकधा भवति त्रिधा भवति' इत्यादिषु देहसंबन्धाख्यो ह्यर्थ उपलभ्यते । अतः क्षीणकर्मणोऽपि सूक्ष्मशरीरयुक्तस्य देवयानेन गमनमुपपद्यते । कथं सूक्ष्मशरीरमप्यारम्भककर्मविनाशे व्यवतिष्ठतीति ? विद्यामाहात्म्यादिति ब्रूमः । विद्या हि स्वयं सूक्ष्मशरीरस्यानारंभिकाऽपि प्राकृतसुखदुःखोपभोगसाधनस्थूलशरीरस्य सर्वकर्मणां च निरवशेषक्षयेऽपि स्वफलभूतब्रह्मप्राप्तिप्रदानाय देवयानेन पथा एनं गमयितुं सूक्ष्मशरीरं स्थापयति । यथा लोके सस्यादिसमृद्ध्यर्थमारब्धेऽपि तटाकादिके तद्धेतुषु तदिच्छा-

ऽऽदिषु विनष्टेष्वपि तदेव तटाकादिकमाशिथिलं कुर्वतः तत्र पानीयपानादिकं कुर्वन्ति तद्वत्' इति । अनेन ह्ययमभिप्रायो गम्यते । अपहतपाप्मत्वादिस्वरूपनिरोधायकपुण्यपापरूपकर्मनिश्शेषक्षपणसमर्थाविद्यासत्यसंकल्पत्वमुद्भाव्य स्वयमनाकृतानेकदेहपरिग्रहं कारयती सर्वलोककामचारादिकं न कल्पयन्तो कथं देवयानेन पथा परमपदप्राप्तिपर्यन्तं सूक्ष्मशरीरावस्थापनं तथा स्यादिति ? अतो विद्या स्वयं पुण्यपापयोः निश्शेषक्षयं कल्पयित्वाऽपि स्वफलभूतपरमपदप्राप्तिसिद्धये सूक्ष्मशरीरमवस्थाप्य अपहतपाप्मत्वादिस्वरूपमप्याविर्भाव्य तत्तत्काले चिनाप्राकृतभोगसमृद्धये तथाविधशरीरादिकमपि सम्पाद्य सर्वं संघटयतीति किमनुपपन्नम् ? 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरस्समुत्तिष्ठन्ति' इत्यादिश्रुतिषु 'संकल्पादेव तच्छ्रुते' इति सूत्रे च एवशब्देन संकल्पातिरिक्तकारणनिरपेक्षतां वदता सर्वमवगतम् ॥

एतेन सकले भगवत्प्रसादे च कर्मसापेक्षतामापाद्य मुक्तौ कर्मानुवृत्तिं वदन् कश्चिदुन्मत्तोऽपि प्रत्युक्तः । उपासनस्य ज्ञानरूपत्वात् तेन च सत्यसंकल्पत्वरूपज्ञानगतावस्थाविशेषात् एव सर्वोपपत्तेः क्वापि कर्मसंबन्धगन्धाप्रसक्तेः ॥ एतेन यत्तेनैव जल्पितम्— भगवत्प्रसादस्तावदागन्तुकः । स च उपादानमन्तरेण नोत्पत्स्यते । तदुपादानं च नोपासनादन्यदुपलभ्यते । भगवत्स्वरूपस्वभावविकारद्वयशून्यतायाः 'नात्मा श्रुतेः' इत्यधिकरणे त्वया उक्तत्वात् ईश्वरस्य तदुपासनत्वादुपपत्तेः । अत उपासनमेव तदुपादानमिति मुक्त्यादावपि तदनुवृत्तिरावश्यिकी इति तदपि निरस्तम् । उपासनायाः ज्ञानरूपतया तदनुवृत्तावप्यदोषत्वात् । व्यापाररूपत्वेऽपि वा पुण्यपापयोरेव मुक्तौ निश्शेषनिवृत्तिस्वीकारः व्यापारमात्रनिवृत्तेरनंगीकारात् । प्रसादस्य ज्ञानविशेषरूपस्य नित्यतया तत्कारणानपेक्षणाच्च ॥ न च प्रागपि तत्सत्त्वादुपासनवैयर्थ्यं, संसारासिद्धिश्चेति वाच्यम् । नित्यस्याप्यनुग्रहस्य तत्तत्कर्मप्रतिबद्धस्वविषयताकस्य तदभिव्यक्तये प्रतिबन्धनिवर्तकतया उपासनासार्थक्यात् । अत एव प्राक्संसारसिद्धेरसर्वमोक्षप्रसंगाच्च न किंचिदनुपपन्नम् ॥

इद तु विचारणीयम् । प्रसादोपादानमिति वदता उपासनानुवृत्ति च वदत किमभिप्रेतम् ? कि मुक्तावुपासन प्रसादरूपेणानुवर्तत इति, किवा स्वरूपेणानुवर्तत इति ? आद्य न जीवस्य निश्शेषकर्मक्षयानुपपत्ति. प्रसादस्यभगवन्निष्ठत्वात् ॥

ननु जीवनिष्ठोपासनोपादानकस्यकथं भगवन्निष्ठतेति चेत्— त्यज तर्हि तदुपादानताम् । व्यधिकरणयारुपादानोपादेयभावानुपपत्तेः । अस्तु तर्हि प्रसादोऽपि जीवनिष्ठ इति चेत् ; उन्मत्तप्रलपितमेतत् । भगवदनुग्रहरूपस्य प्रसादस्य 'धातुः प्रसादात्' इत्यादिप्रमाणलोकन्यायादिभिः अनुग्राहकनिष्ठस्यानुग्राह्यनिष्ठत्वानुपपत्तेः । अतो विषयतासबन्धेन भगवन्निष्ठमुपासनं तद्गत प्रसादमुपासकविषयमुत्तभयन् तन्निमित्तमित्येव युक्तम् ॥ नच निमित्तस्य कार्यकालानुवृत्तिर्नियता । मानसव्यापाररूपस्य तस्य स्वोपादाननिवृत्त्या निवृत्त्यौचित्याच्च । तयोर्भेद तु भाष्यादौ विस्तरेण निरस्तः । तत्रापि मते स्वरूपेणानुवृत्तेरनगीकारात् । त्वन्मतेऽपि दुर्वारत्वाच्च ॥

अत एव न स्वरूपेण तदनुवृत्तिरिति द्वितीयकल्पोऽपि कल्पते । उपादानोपादेययोरभिन्नतया स्वरूपेण तदनुवृत्त्यनौचित्यात् । अतो मुक्तौ कर्मानुवृत्तिकल्पनं जडकृत्यमेव ॥

यत्तु 'विचार्यमाणे तव यच्छरीरमाधारभूतं जगतामुपैति ।
तदप्यवश्यं मदविद्ययैव पूर्णश्चिदानन्दमयो यतस्त्वम् ॥

इति पारमेश्वरशरीरस्यापि जीवकर्मवासनाऽपरनामधेयाविद्योपादानकत्वमुक्तम् । इत्थं सति तदीयान्तःकरणधर्मस्य प्रसादस्य तदुपादानकत्व नास्तीति का वा प्रमा ? तस्मादुपादानस्य कर्मणो मुक्तावनुवृत्तिर्दुर्वारा । निमित्तत्वेऽपि तदनुवृत्तिर्दुर्वारा । नहि मुक्तिकाले प्रतिक्षणमुत्पद्यमानस्य प्रसादस्य उपादानकर्मवासनारूप निमित्त नानुवर्तत इति शक्य वक्तुम् । निमित्ताभावे नैमित्तिकस्य प्रसादस्यापि प्रतिक्षणमनुत्पत्तिप्रसगात् । तस्मान्मुक्तौ सुकृतकर्मानुवृत्तिर्दुर्वारा । एवं दुष्कृतकर्मानुवृत्तिरपि । अमृतबिन्दूपनिषदि—

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥

इत्यनेन कामसंकल्पयोरशुद्धमनःपरिणामत्वमुक्तम् । अशुद्धिश्च मनसः पापकर्मकृता । चित्तशुद्धेः पुण्यकर्मसाध्यत्वात् । अत एव—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥

'प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तथोच्यते ॥'

इत्यादिश्रुतिस्मृतयो मुक्तानामात्यन्तिकप्रलयमभिदधति ॥ किंच 'काम एष क्रोध एष रजोगुणसमुद्भवः' इति भगवतैवोक्तम् । 'रजसस्तु फलं दुःखम्' इति च भगवतैव प्रोक्तम् । किं च 'ये हि संस्पर्शजा भोगाः दुःखयोनय एव ते । आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् । परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥' इति हि भगवतोक्तम् ॥ तस्मान्मुक्तौ विषयेन्द्रियसंयोगात् जन्यसुखमभ्युपगच्छता त्वया दुःखस्य तदुपादानभूतस्य पापस्य च अनुवृत्तिरभ्युपगतैव । अतो विरोधो दुर्वार इति । तदेतत्सर्वमुन्मत्तचित्तमूर्खपाण्डितंमन्यजल्पितमश्रव्यमनुच्चरितव्यं च । तथाऽपि तदीयोन्मादमेव विशदयितुं किंचिदुच्यते । परमात्मनो जीवकर्मवासनाऽपरनामकाविद्योपादानकशरीरवत्त्ववचनं तावत् अयुक्तम् । 'न भूतसंघसंस्थानो देहोऽस्य परमात्मनः । न तस्य प्राकृता मूर्तिः मांसमेदोऽस्थिसंभवा ॥' 'सर्वे नित्याश्शाश्वताश्च देहास्तस्य महात्मनः । परमानन्दसंदोहा ज्ञानमात्राश्च सर्वशः ॥' इत्यादिवचनशतोपबृंहिताभिः 'न कर्मणा वर्धते नो कनीयान्' इत्यादिश्रुतिभिश्च भगवतोऽप्राकृतदिव्यविग्रहवत्त्वावगमात् ॥

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामवष्टभ्य संभवाम्यात्ममायया ॥

इति तु 'स्वां प्रकृतिं स्वं स्वभावमधिष्ठाय अजहदेव । आत्ममायया— आत्मन

रसंकल्पात्मकेन ज्ञानेन । 'माया वयुनं ज्ञानम्' इति हि वेदनिघण्टुः । संभवामि– आविर्भवामि' इति व्याख्यातम् । 'अजायमानो बहुधा विजायते । तस्य धीराः परिजानन्ति योनिम्' इति च श्रुतिः । अत्र अजायमान इति जीववत् प्राकृतशरीरसबन्धशून्यता प्रतीयते । 'बहुधा विजायते' इति चाप्राकृतदिव्यविग्रहवत्त्वमुच्यते । पूर्णस्य बहुधाजननच अशरीरद्वारकम् । 'अशरीर शरीरेषु अनवस्थेष्ववास्थितम्' 'अपाणिपादो जवनो गृहीता' इत्यादिकं तु प्राकृतशरीराभावविषयम् । 'आदित्यवर्णं तमसः परस्तात्' 'हिरण्यश्मश्रुर्हिरण्यकेश.' इत्यादिक तु अप्राकृतशरीरपरमित अन्तर्यामिब्राह्मणादिस्वारस्यादवगम्यते ॥ 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देह पुनर्जन्म नैति मामेति सोऽर्जुन ॥' इतिच भगवतैव उक्तम् । अत्र ह्यप्राकृतशरीरवत्तया जन्म चेत् तज्ज्ञानात्कथमस्य प्राकृतदेहनिवृत्ति पुनस्तत्संबन्धाभावं च ब्रूयात् । सनामरूपेण सनामरूप सेव्यः कथं स्यात् ? 'स्वसमानरूपः' इति हि स्मृतिः । अतोऽप्राकृतदिव्यविग्रहवतो यस्य ध्यानात् प्राकृतसर्वकर्मनिवृत्तिः यश्च अप्राकृतदिव्यव्यापारवत्तया 'सर्वकर्मा सर्वरसः' इत्यादिश्रुतिशतविदितः तस्य अविद्याप्राकृतशरीरसंबन्धं वदन् उन्मत्तचित्तः कथमताद्दशैः सभाष्यः ॥

शिवगीतावचनं तु सर्वजगदाधारभूतं दिव्यमपि शरीरं उपासकानुजिघृक्षया उपैति हृदयगत भवतीति इति यत् तदनृतम् । विद्याया एव मृत्युतरणहेतुतायाः 'अविद्यया मृत्यु तीर्त्वा विद्ययाऽमृतमश्नुते' इत्यादिश्रुतिषु 'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥' इत्यादिभिरुपबृंहितासु श्रुतया मदविद्ययैव–मदीयपुण्यकर्मणैव । तथा च भाष्यम्— 'मृत्युतरणहेतुरविद्या विद्येतरत् विहितं कर्मैवोत' मृत्युशब्दो हि संसारवाची । नचाविद्यया संसारहेतुभूतया संसारतरणं शक्य कर्तुम् । विहितपुण्यकर्मणां तु अन्तःकरणनैर्मल्यद्वारा तदनुष्ठानप्रीतभगवत्प्रसादसंपादनेन संसारतरण भवतीति युक्तं वक्तुम् । तत्र हेतुः पुण्य इत्यादि । परिपूर्णत्वादानन्दमयत्वाच्च अल्पेनास्मत्कृतेन कर्मणा प्रसीद

तीति तदर्थः । अतो न तेन वचनेन जीवकर्मवासनाजन्यत्व भगवद्विग्रहस्योच्यते । अन्यकर्मवासनाया अन्यदेहोपादानत्व तु सुतरामसभवी अति प्रसगात् । भार्यापुत्रादिशरीरेष्वपि तदीयकर्मैव भवत्युपादानम् । भोक्तृकर्मतु निमित्तमात्रम् । नह्येवमीश्वरस्यापि किंचिदस्ति कर्म ? कर्मशून्यत्वात्तस्येत्युक्तम् । अस्तु वा जीवकर्मनिमित्तत्वमीश्वरस्य । तथाऽपि मुक्तौ कर्मानुवृत्ति कुतस्त्या ? जीवकर्मोपादानक ब्रह्मशरीर जीवकर्मक वा नवा ? तेन जीवस्य सबन्ध न वा ? न वा कार्यकारणयोस्सहभावनियमः । प्रसादस्य प्रतिक्षणमुत्पत्तिविनाशशालिना तु निरस्तैव । प्रसादसन्ताने पूर्वपूर्वप्रसादस्यैव उत्तरोत्तरप्रसादोत्पादकतया शब्दाच्छब्दोत्पत्तौ भेरीदण्डसयोगस्यैव चक्रभ्रमणादौ चक्रदण्डसयोगस्यैवानुवृत्ते । अनवेक्षणेन तदर्थं कर्मानुवृत्तेरकल्पनाच्च ॥

यच्च कामसकल्पयोरशुद्धमनोजन्यत्वात् मुक्तावपि दुरितकर्मानुवृत्तिरिति उक्तम् तदप्युन्मादविलसितम् । सांसारिकविषयगोचरयोरेव कामसकल्पयोः अशुद्धमनःकार्यत्वेन 'स यदि पितृलोककामो भवति सकल्पादेवास्य पितरस्समुत्तिष्ठन्ति' इत्यादिषु मुक्तबन्ध पुरुष प्रक्रम्य श्रुतयोः कामसंकल्पयोरशुद्धमनोजन्यत्वोक्तेरज्ञानविजृंभितत्वात् । 'संगात्सजायते कामः कामात्क्रोधोऽभिजायते' इत्यादिना प्रणाशहेतुत्वेनोक्तस्य 'काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥' इति राजसत्वेन मुक्तिविरोधित्वेन चोक्तस्य च क्रोधहेतो. 'कामस्यैवकामा येऽस्य हृदि श्रिताः' इत्यत्र त्याज्यत्वेनोक्ततया शुद्धसत्वप्रयुक्तकामस्य त्याज्यताया. तत्रानुक्तत्वात् । 'शुद्ध कामविवर्जितम्' इत्यादेरपि तद्विषयत्वात् । अन्यथा 'सोऽकामयत बहु स्याम' 'कामाच्च नानुमानापेक्षा' इत्यादेरपि त्याज्यविषयत्वापत्ते. । अतोऽत्र 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता' 'सर्वान्कामान् समश्नुते' इत्यादिवाक्यप्रतिपन्नकामानां ग्राह्यत्वेनोक्तानां त्याज्यत्वात् । नहि श्रौतस्य श्रुत्या त्याज्यत्वोक्तिर्घटते । अत 'कामस्सकल्पः' इत्यादेरेव 'कामा येऽस्य' इत्यत्रापि सांसारिकहेयका-

मानामेव त्यागो नान्येषां विहितानामिति काममात्रस्य त्याज्यत्ववचनमुन्मादविलसितमेव । अत एव हि 'कामा येऽस्य हृदि श्रिता' 'प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान्' इत्युभयत्रापि मनोगतत्वमुच्यते अत एव च स ब्रह्म समश्नुते' 'आत्मन्येवात्मना तुष्ट' इति तत्कामत्व तत्रैवोच्यते । सर्वकामत्यागे तु तद्विरोधस्स्यात् । अत एव हि 'येहि संस्पर्शजा भोगा ह्यात्मयोनय एव ते । आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥' इत्यपि कर्मकृतविषयमेव नेतव्यम् ॥ 'विषयेन्द्रियसंयोगात्' इत्यादिकमपि गुणत्रयनिरूपणप्रकरणस्थत्वात् प्राकृतसुखमेवेति नाप्राकृते तत्प्रसंग. ॥ श्रूयन्ते ह्यप्राकृता अपि भोगा मुक्तमधिकृत्यैव । 'स तत्र पर्येति जक्षन्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा' इत्यादिषु ॥ विस्तरस्तु सारदर्पणे मोक्षनिरूपणप्रकरणे । तस्मान्न कोऽपि विरोधगन्धः ॥

इति श्रीशैलश्रीनिवासकृते विरोधनिरोधे

॥ नवमो निरोधः ॥



## अथ दशमो निरोधः

अपरिच्छेद्यरूपोऽपि भक्तानुग्रहकाम्यया ।
परिच्छेदं भजन् भावे भासतां भगवान् मम ॥

ननु जैनभगे सत्वासत्वयोरेकस्मिन्विरोधात् सप्तभंगी निराकृता । तत्कथमेकस्मिन्नेव ब्रह्मणि विरुद्धमपरिच्छेदं परिच्छेदं च अङ्गीकृत्य उपास्यता व्यवस्थाप्यते ? नहि परैरिव एकं तात्त्विकमन्यदतात्त्विकं त्वया इष्यते येन अविरोधस्स्यात् । नच 'अणोरणीयान् महतो महीयान्' इति श्रुतिप्रमितत्वादुभयाङ्गीकारः ; वस्तुनो द्वैरूप्यायोगेन श्रुत्याऽपि तत्प्रतिपादनासंभवात् नहि तात्विकं परस्परपारिपन्थि धर्मद्वयं श्रुतिरपि एकत्र प्रतिपादयितुं शक्ता

ति ? अशक्यस्यार्थस्य वेदतात्पर्यविषयत्वायोगात् । अतो ग्रावप्लवनवत् ब्रह्मणः परिच्छिन्नत्वापरिच्छिन्नत्वे न श्रुतिप्रमेय इति श्रुतिरुपचरितार्थाऽङ्गीकर्तव्येति चेत्— सत्यम् ; महत्त्वस्य स्वाभाविकत्वेन अणुत्वस्य हृदयावच्छेदौपयिकत्वेनादोषत्वात् । तदेतत् सूत्रकार एवाह— 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न निचाय्यत्वादेव व्योमवच्च' इति । अत्राल्पस्थानत्वादल्पत्वश्रवणाच्च परिच्छिन्नत्वाभावमाशक्य 'एवं निचाय्यत्वादिति' उपासनार्थं हृदयाद्युपाधिकमिदमल्पत्वम् व्योमवत् । वैपुल्याम्नानं तु उपासनानुपयोगित्वात् स्वाभाविकम् ; अतो न द्वयोर्विरोधः । औपाधिकस्य स्वाभाविकधर्माविरोधात् ॥

अत एव तस्याणुभूतजीवान्तर्यामित्वमप्यविरुद्धम् । तथा च श्रूयते । 'एष म अन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा' इति 'यमात्मानमन्तरो यमयति' इति च । तच्चान्तर्यामित्वमर्थपञ्चकप्रतिपन्नातिसूक्ष्मविशिष्टवेषेणेति व्यक्तं प्राचीनग्रन्थेषु ॥

इदं तु शंकनीयम् । निरवयवस्याणोर्जीवस्यान्तरप्रदेशाभावात् तद्वृत्त्यन्तर्यामिरूपत्वं कथमुपपद्यत इति चेत्— अत्र केचित् । दृढसबन्ध एव नियमनोपयुक्तोऽन्तर्यामितारूपः । नान्तर्देशे विद्यमानत्वम् । अतो न जीवान्तर्यामित्वं परमात्मनो विरुद्धमित्याहुः । अन्ये तु निरवयवत्वेऽपि जीवस्य निबिडद्रव्यतया स्वच्छतया अन्तःप्रवेशो न विरुद्धः । अनादिरसंबन्धोऽनागन्तुकः । अतोऽपि न विरोध इत्याहु. । अन्ये तु निरवयवत्वेऽपि जीवस्य वस्तुतः 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते' इत्यादौ उभयोः तुल्यवदेकशरीरसंबन्धप्रतिपादनात् सूत्रकारेणापि 'गुहां प्रविष्टावात्मानौ हि' इत्यादौ तथैवोक्तत्वात् 'हृद्यपेक्षया तु' इति हृदयावच्छेदनिबन्धनमंगुष्ठप्रमितत्वमित्यभिधानात् जीवावच्छेदनिबन्धनत्वानुक्तेः । 'अन्तर्वसति वसुमति दाक्षिणस्सप्ततन्तुः' इत्यादिवत् बुद्धिविषयत्वेनाप्यन्तर्यामित्वव्यपदेशोपपत्तेः नियन्तृत्वस्यापि राजाऽऽदिवत्तथैवोपपत्तेः न तदर्थं

जीवस्य अन्तर्देशे परमात्मनः प्रवेशकल्पनाप्रसङ्गः । ' अन्तःप्रविष्टश्शास्ता जनानां ' ' अन्तःप्रविष्टं कर्तारमेतम् ' इत्यादिरपि अयमस्य हृदयं प्रविष्टः ' इत्यादविरोपपन्नः । अतः हृदयाद्युपाधिकमणुत्वं नानौपाधिकं महत्त्वं बाधितुं क्षमते ॥

ननु ' एष म आत्मा अन्तर्हृदये अणीयान् ' इत्यत्रैव ' एष म आत्माऽन्तर्हृदये ज्यायान् ' इत्यपि श्रवणादणुत्वस्येव महत्त्वस्यौपाधिकत्वं किं न स्यादिति चेत्— भ्रान्तोऽसि । यतोऽणुत्वं तत्तदौपाधिकं युक्तं ततोऽधिकस्य तदवच्छेदत्वात् । दृष्टोह्याकाशस्य घटादिरवच्छेदकः । नह्येवं घटादेरवच्छेदक आकाशः । अतः पृथिव्यादिभ्यः ज्यायस्त्वं परमात्मनः पृथिव्यादीभिरेवावच्छेद्यत्वम् । कुतो हृदयेन । अतो न परिच्छिन्नत्वापरिच्छिन्नत्वयोर्विरोधः ॥

एतेन यत् केन चित् मूढमूर्खजनमूर्धन्येन प्रलपितम्— ' नैकस्मिन्न सभवात् ' इत्यत्र स्यादस्ति स्यान्नास्तीति एकदा सत्वासत्वादिविरुद्धधर्मद्वयमातिष्ठमानस्य जैनस्य मतं दूषयतां ब्रह्मण्येकस्मिन्नेव परिच्छिन्नत्वापरिच्छिन्नत्वरूपविरुद्धधर्मद्वयांगीकारो विरुद्धः । दिव्यमङ्गलविग्रहविशिष्टत्वेन क्षीराब्धिमध्यवृत्तित्वं शेषशायित्वं गरुडध्वजत्वं सूर्यमंडलकेलिगृहादिविहारित्वं इत्यादिकं हि सत्वं नापरिच्छिन्नत्वेऽवकल्पते । तथा सति तेषां ततोऽप्यपरिच्छिन्नत्वात् तेषामेव परब्रह्मत्वं स्यात् । न हि रविमण्डलगतं ब्रह्म दर्पणाबिंबितगजादिवन्मिथ्याभूतमिति त्वयेष्यते । तात्विकत्वाभ्युपगमात् । जीवान्तर्यामित्वार्थं निरतिशयसूक्ष्मत्वमंगीकार्यम् । नहि स्थूलं ब्रह्म वालाग्रशतभागपरिमितस्य जीवस्यान्तर्यामी भवितुमर्हतीति । तदेतदुन्मादविलसितमिति निरस्तमेव । हृदयाद्यौपाधिकस्याणुत्वस्य महत्त्वाविरोधित्वादित्युक्तत्वात् ॥

नचैतावता मिथ्यात्वप्रसङ्गः । उपाधेरपि तात्विकत्वात् । तस्य चोपासनार्थमवश्यमंगीकार्यत्वात् । जैनैस्तु द्वयोरप्यस्तित्वनास्तित्वयोः स्वाभावि

कत्वांगीकारान् विरोध उक्त । अत एव अप्राकृतदिव्यमूर्तिवैशिष्टयेनापि परिच्छिन्नत्वम् । तदुपाधिकालितत्वादपरिच्छेदाविरोध्येव प्रमाणप्रतिपन्न. त्वान् तदपि तात्विकमेव ॥ नच तस्य परिच्छिन्नत्वे तत्परिच्छेदकसूर्यम ण्डलादेरपरिच्छिन्नत्वप्रसग. । आकावच्छेदकघटादिषु व्यभिचारात् ॥

नच तावता ब्रह्मत्वप्रसंगोऽपि । नहि देशापरिच्छिन्नत्वमेव ब्रह्मत्वम ब्रह्मगुणादिषु व्यभिचारान् । अपि तु वस्तुगुणाभ्यामपि । नचैतत् ब्रह्म- णोऽन्यत्रापि । तदेव परिच्छिन्नत्वापरिच्छिन्नत्वयोरौपाधिकस्वाभाविकयोः वि रोधित्वकथन प्रथममुन्मादविलसितम् । तत्परिच्छेदकसूर्यमण्डलादेः अपरि- च्छिन्नत्वकथन द्वितीयमुन्मादविलसितम् । तत्परिच्छेदकानां ब्रह्मत्वकल्प न ब्रह्मणस्तदभावकल्पन च तृतीयमुन्मादविलसितम् । रविमण्डलादिगतस्य ब्रह्मणो दर्पणगतबिंबादेरिव अतात्विकत्वशङ्का चतुर्थमुन्मादविलसितम् । दृ- ष्टान्तप्रदर्शनं पञ्चममुन्मादविलसितम् । दर्पणप्रतिहतनायनरश्मीनामेव मु- खादप्रातेनास्कत्वांगीकारेण तत्रातात्विकस्य तात्विकस्य वा वस्त्वन्तरस्य असि द्धेः । तस्यापरिच्छिन्नस्य परिच्छिन्नजीवान्तर्यामित्वासंभवकथनं षष्ठमुन्माद बिलसितम् ॥

यदपि प्रलपनान्तरम्— आकाशवाय्वो. सावयवत्वमंगीकुर्वतस्तव म- ते ब्रह्मणोऽपि सावयवत्वं कैमुतिकन्यायसिद्धमिति तत् सप्तममुन्मादविल- सितम् । आकाशादेस्त्रिवृत्करणपञ्चीकरणादिप्रक्रियया संभूतत्वात् । युक्त्या सावयवत्वसिद्धावपि ब्रह्मणस्तथाविधग्राहकाभावेन प्रत्युत 'निष्कल निष्क्रि शान्तम्' इत्यादिनिरवयत्वबोधकश्रुत्या च तस्य सावयवत्वकल्पनानुन्मेषात् । किंच आकाशादीनां सावयवत्वे ब्रह्मणोऽपि सावयत्वं कैमुतिकन्यायासिद्धि- मिति जल्पत. कोऽभिप्राय. ? किं मूर्तस्य विभोराकाशस्य सावयत्वे त- न्न्यायेन ब्रह्मापि सावयवमेव स्यादिति ? किं तच्छरीरकत्वात् तद्विशिष्टस्य कारणत्वात् ब्रह्मत्वाच्च तस्यापि सावयत्वादिति ? नाद्यः । उक्तोत्तरत्वात् । न द्वितीयः । जीवस्येव ब्रह्मणो विनीतत्वोपपत्तेः । किंच तत्रापि शरीरस्य सावयवत्वमापाद्यते शरीरिणो वा ? आद्ये इष्टप्रसंगः । सावयवत्वनिरवयवत्वयोः

शरीरिशरीरगतत्वेन एकगतत्वाभावाद्विरोधश्च ॥ द्वितीये आ।ादकाभावः विशिष्टं ब्रह्मेति पक्षे व्यवस्थान्तरापत्तिरूपपरिणामे श्रुतिप्रतिपन्नेऽपि अचिदंशे स्वरूपपरिणामे तद्द्वारा ब्रह्मणोऽपि परिणामवत् सद्वारकसावयवत्वापादानस्य इष्टत्वात् । अद्वारकतदापादने हेत्वभावात् । 'निष्कलं निष्क्रियं शान्तम्' इत्यादिभिः तन्निषेधाच्च ॥

किंच नाकाशादेः अमूर्तत्वम्, परिच्छिन्नत्वात् रूपवत्त्वात् तच्च नीलं नभ इति चेत् प्रभायां दूरे तदनुपलम्भे अतिसमीपे तदुपलम्भनावस्थं चक्षुर्देशे त्वचोपलंभेऽपि अन्यदेशे तदनुपलंभतत्समीपे तदुपलम्भस्यापि यथोपलंभमन्यथासिद्धत्वात् न तदनुरोधेन दूरेऽपि तदुपलम्भस्याप्रामाण्य युक्तमाश्रयितुम् अतिप्रसंगात् । अतः परमात्मनः सावयवत्वप्रसंजनमपि उन्मादविलसितं सप्तमम् ॥ यश्च ब्रह्मणः परिच्छिन्नत्वेन मूर्तत्वप्रसंजनं तदप्यष्टममुन्मादविलसितम् । औपाधिकपरिच्छिन्नत्ववत्तादृशमूर्तत्वस्यापीष्टत्वात् । शेषशायित्वादेः शरीरद्वारकतया शरीरस्य मूर्तत्वेऽपि शरीरिणा जीवस्येव परमते ब्रह्मणोऽप्यस्मिन्मते निरवयवत्वोपपत्तेश्च । 'दिव्यो ह्यमूर्तः पुरुषः' इति तु स्वाभाविकस्वरूपत्वाभिप्रायम् । नत्वनेन ब्रह्मणो मूर्तत्वमभिधीयते अत एतद्वाक्यस्य अमूर्तत्व ब्रह्मणोऽभिदधतः नवममुन्मादविलसितम् । श्रुतेरन्यथोदाहरणं दशममुन्मादविलसितम् । इयं हि श्रुतिः बृहदारण्यके इत्थं पठ्यते । 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च मर्त्यंचामृतं च स्थितं च यच्च सच्च त्यच्च तदेतन्मूर्तं यदन्यद्वायोरन्तरिक्षाच्च । एतन्मर्त्यमेतत् स्थितमेतत्सत् तस्यैतस्य मर्त्यस्य मूर्तस्य एतस्य स्थितस्य एतस्य सतः एष रसो यँ एष तपति सतोह्येष रसः ।' 'अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाशमेतदमृतमेतमेतद्यत् तस्यैतस्यामूर्तस्य एतस्यामृतस्य एतस्य यत एतस्य त्यस्य एष रसः योयं दक्षिणेऽक्षिण पुरुष इति । अत्र हि वाय्वन्तरिक्षव्यतिरिक्तानांहार्दाकाशातिरिक्तानां च मूर्तत्व तेषां चतुर्णां, चामूर्तत्व तयोरुभयविधयोश्च भगवच्छरीरत्वमुच्यते । मूर्तत्वंच अनिबिडत्वम् । मर्त्यत्वं नश्वरत्वं, तद्राहित्यममृतत्वं, स्थितत्वं अव्यापकत्वं, यत्त्व व्यापकत्वं, एति गच्छतीति

व्युत्पत्तेः । सत्त्वं प्रत्यक्षत्वं त्यत्वमप्रत्यक्षत्वम् ॥ एवं स्थिताय श्रुतौ 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तंच' 'अथ यन्मूर्तं तदसत्यं यदमूर्तं तत्सत्यं तद्ब्रह्म' इति श्रुतिपाठ उन्मादविलसितमिति स्पष्टमेव ! कृत्स्नप्रपञ्चमिथ्यात्वमंगीकुर्वतः त्वस्य मते ह्यायन्तरिक्षप्राणादेरमूर्तस्य सत्यत्वाभावेन यदमूर्तं तत्सत्यमित्युक्तेः स्वमतविरुद्धत्वादिदमेकादशमुन्मादविलसितम् । एतादृशममूर्तत्वं जीवकाशाद्यमूर्तान्तर्यामित्वाभ्युपगममिति भ्रमेण । अन्यथा जीवाकाशाद्यन्तर्यामित्वानुपपत्तेरिति द्वादशमुन्मादविलसितम् ॥

अत एव अपरिच्छिन्नत्वानिरतिशयसूक्ष्मत्वनिरवयत्वामूर्तत्वानां परिच्छिन्नत्वस्थूलत्वसावयत्वमूर्तत्वानां तेजस्तिमिरतुल्यानां विरुद्धानां एकस्मिन् ब्रह्मणि एकदा सर्वाभ्युपगमो विरुद्ध इति निगमनं त्रयोदशमुन्मादविलसितम् औपाधिकत्वाद्भिन्नाश्रयादिवृत्तित्वेन च अविरोधोपपादनात् । अत एव उपाधिभेदाद्व्यवस्थेत्याशंक्य अनभ्युपगमादिति दूषणं विशिष्टोपादानपरत्वे तु इष्टप्रसंग एव । अविद्योपाहृत इत्यर्थस्त्वप्रामाणिकत्वादेवायुक्तः ॥

एतेन सत्ताभेदानभ्युपगमेऽपि श्रुतिबलादेकस्मिन्विरुद्धधर्माणां समावेशस्स्यात् किमिह वचनं न कुर्यात् नास्ति वचनस्यातिभार इति न्यायात् । अत एव सूत्र 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' इति । तत्र विरुद्धधर्मासंभवं शंकित्वा श्रुतेस्तु शब्दमूलत्वात युक्तत्वमाशंक्य एवं हि संसारित्वासंसारित्वादिविरुद्धधर्माणामपि स एव मायापरिमोहितात्मा 'ब्रह्म दाशा ब्रह्म दासा' 'असंगो ह्यय पुरुषः' इत्यादिश्रुतिबलात् एकस्मिन्ब्रह्मणि सम्भवात् 'तत्त्वमसि' इत्यादीनां परस्सहस्राणां वेदान्तवाक्यानां ग्रावप्लवनादिवाक्यवदविवक्षितार्थत्वकथनमयुक्तमित्यपि पञ्चदशमुन्मादविलसितम् ॥

स्वाभाविकास्वाभाविकयोरेकस्मिन्नप्यविरोधात् । ये तु वचनबलादुभयोस्स्वाभाविकत्वं वदन्ति केवलाद्वैतिनस्तेषामयं दोषस्स्यात् नास्माक, श्रुतेस्तु

शब्दमूलत्वात्' इत्यपि न विरुद्धयोर्धर्मयोः स्वाभाविकयोः एकत्र समावेशं वचनबलादास्थेयमाह किन्त्वनुपपन्नं द्वयमेकत्र श्रुतं सद्वारकमद्वारकं वा स्वाभाविकमौपाधिकं वा कथंचिदुपपादनीयमिति अत्रानुकूलत्वात् ॥

नन्वेतावता सांसारिकत्वासांसारिकत्वादतिप्रसंगः। कर्मानुबन्धित्वात्संसारस्य ब्रह्मणः तच्छून्यत्वात्। वक्ष्यमाणप्रतिपन्नत्वात् स एव मायापरिमोहित इत्यस्य जीवविषयत्वात्। अभेदव्यपदेशस्य सर्वस्य ब्राह्मणोऽहमित्यादिवत् शरीरशरीरिभावेन वा, मृद्घट इतिवदुपादानोपादेयत्वेन वा, राजा राष्ट्रमितिवत् निर्वाह्यनिर्वाहकभावेन वा, तैलं भुक्तं घृतं भुक्तमित्यादिवत् अंशांशिभावेन वा, राजैवायं सेनानीरितिवत् अत्यन्तसादृश्यभावितया वा सम्यगुपपन्नत्वमन्यत्रोपपादितं श्रीमद्भाष्यादौ च विस्तृतमिति तत्र ग्रावप्लवनादिवाक्यतुल्यत्वोपपादनं षोडशमुन्मादविलसितम् ॥ प्रत्युताभेदवादिनामेव स्थाणुः पुरुष इत्यादिवाक्यतुल्यत्वापत्तिदुष्टतया जात्युत्तरम्। विशिष्टयोरभेदाविरोधाद्विशेष्यत्वभेदस्य त्वन्मते सिद्धत्वात्। नहि स्वस्य स्वेनाभेदः प्रयत्नोपपाद्यः? नच भेदभ्रान्तिमात्रवारणमागमकृत्यमिति कस्यापि मतिर्भवति इति यत्किंचिदेतत् ॥

एतेन समसत्ताकानां परिच्छिन्नत्वापरिच्छिन्नत्वानां ब्रह्मण्यविरोधं श्रुतिबलादुपगम्य विषमसत्ताकानां संसारित्वासंसारित्वादीनां विरुद्धधर्माणां ब्रह्मणि संभवमभिदधानानां दूषणमयुक्तमित्यपि सप्तदशमुन्मादविलसितम्। प्रामाणिकत्वाप्रामाणिकत्वाभ्यां स्वरूपविरोधित्वतदविरोधित्वाभ्यां उपाधिसंबन्धिसंभवासंभवाभ्यां च वैषम्यात्। नहि ब्रह्मणः संसारित्वे क्वापि प्रमाणे संप्रतिपन्नम्। नवा नित्यासंकुचितज्ञानस्याप्रतिहतशक्तेः आनन्दमयज्ञानसंकोचककर्मानुबन्धिदुर्निवारदुःखमयसंसारसम्बन्धसंभवः? नवा स्वप्रकाशज्ञानैकरसस्य तद्विरोध्यज्ञानावरणरूपोपाधिसंभवः? नह्येवं हृदयाद्युपाधिसंबन्धे कश्चिद्विरोधोऽस्ति? नवा स्वरूपविरोधः? अस्ति च प्रमाणं 'एष म आत्माऽन्तर्हृदय' इति। अत एव हि श्रुतिप्रमितमप्युपादानत्वं ब्रह्मणोऽपरिणामित्वाद्विरुद्धमिति तदनभ्युपगम्य चिदचिद्द्वारकं तदिति व्यवस्थाप्य

इह श्रुतिप्रमितमिति एतावता विरुद्धमिति परिच्छिन्नत्वापरिच्छिन्नत्वादिकं एकत्राभ्युपगन्तुमयुक्तमित्युक्तं तदष्टादशमुन्मादविलसितम् । अवस्थान्तरापत्तिरूपोपादानत्वस्य ब्रह्मणस्समभ्युपगमात् । चिदचिद्विशिष्टब्रह्मण उपादानत्वात् । उपादेयत्वाद्विशेषणांशं प्रति उपादानत्वं सूक्ष्मचिदचिद्रूपविशेषणद्वारकम् । विशेष्यं प्रत्यद्वारकमित्येतावदेवोपपादितम् । नहि केवलस्य ब्रह्मण उपादानत्वं कुत्रापि श्रुतम् ? नापि तत् विरुद्धमिति त्यक्तम् । कारणं हि विशिष्टरूपमित्युपक्रमे उक्तम् ।

यत् भिन्नत्वाभिन्नत्वयोः विरुद्धधर्मवत्त्वतदभावरूपयोः एकास्मिन्नसभवादिति जनान् प्रत्युक्त्वा जीवेश्वरयोर्विरुद्धधर्माश्रययोर्भेदं चोपपाद्य इह ब्रह्मणि परिच्छिन्नापरिच्छिन्नत्वादिविरुद्धधर्मसमावेशकथनमयुक्तमिति प्रलपन् तदप्येकोनविंशमुन्मादविलसितम् । जैनमते सत्वासत्वादेरिव जीवेश्वरयोरणुत्वमहत्त्वयोरिव ब्रह्मणि परिच्छिन्नत्वापरिच्छिन्नत्वादेः स्वाभाविकत्वाभावात् । हृदयाद्यवच्छेदनिबन्धनं हि परिच्छिन्नत्वं नैतत् स्वाभाविकं अपरिच्छिन्नत्वं प्रतिरुणद्धि । नहि प्रकाशमयस्य दीपादित्यमणिप्रभादेः घटघनपार्थिवभागादिभिः संकोचस्स्वाभाविकं विपुलत्वं विरुणद्धि ? नच आकाशादेरप्रकाशात्मकस्यापि घटादिभिः परिच्छेदः स्वाभाविकं महत्त्वं प्रतिबध्नातीति यत्किंचिदेतत् । एतदेव परिच्छिन्नत्वस्यौपाधिकत्वं द्रढयितुं 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इति सूत्रे अवधारणार्थकः तुशब्दः प्रयुक्तः श्रुतिश्च 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः' इत्यङ्गुष्ठमात्रं हृदयाद्यौपाधिकं विशिनष्टि । 'हार्दानुगृहीत' इति निर्देशात् । अत्रानुकूल्यासाधारण्याद्धि व्यपदेशः । तस्मादत्र विरोधवचनमुन्मादकृत्यमेवेति दिक् ॥

इति श्रीशैलश्रीनिवासविरचिते विरोधनिरोधे

॥ दशमो विरोधोद्धारः ॥



# अथ एकादशो निरोधः

अस्तिनास्त्य त्मकं वस्तु यस्तु व्याप्नोति सर्वत. ।
तस्मै विश्वशरीराय परस्मै विष्णवे नमः ॥

ननु आस्तिनास्त्यात्मकत्वं तदाकारबुद्धिबोध्यत्वम् । तच्च भावाभावयोरेव तयोः परमात्मना व्याप्यत्वं तच्छरीरत्व वा संभवति । अभावस्याद्रव्यत्वा त् । 'यस्य चेतनस्य यद्द्रव्यम्' इति शरीरलक्षणे द्रव्यपदप्रक्षेपेण द्रव्य-भिन्नस्य शरीरत्वायोगात् । नच अभावो नास्तीतिप्रत्ययगोचरत्वं भावेऽ प्यस्तीति नैकान्त्येन अस्त्यात्मकत्वमभावस्येति वाच्यम् । तथा सति पृ-थक् निर्देशविरोधादिति चेत् सत्यम्— भावान्तराभाववादिनामेतद्विरोधा-भावात् । तर्हि पृथङ्निर्देशः कुत इति चेत्— उच्यते, वस्तु द्विविधम्— नामान्तरभजनार्हावस्थ तच्छून्य तद्विशिष्ट च । आद्यमस्त्यात्मकं चिद्वस्तु । तद्धि सततैकरूपत्वात् न कदाचिदपि नास्तीति प्रत्ययमनुभवति । अपितु सर्वदा अस्तीत्येव प्रतीयते । यस्तु प्रतिक्षणमवस्थांतर भजन् नामान्तर भजन्नामान्तरं प्राप्नोति अचिद्वस्तु तत्तु न सर्वकालमस्तीत्युच्यते । अवस्था-न्तरकाले तदसंभवात् । अतस्तत्र न स्तीति प्रतीतिरेव स्वाभाविकीति तन्नास्त्यात्मकमेव । तेन यद्यपि तत्तदवस्थाकाले अस्तीति प्रत्ययोऽप्यस्ति तथाऽपि नास्तिप्रत्ययविषयत्वात् समानाधिकृतमस्तिप्रत्ययाविषयकत्वमस्त्या मकत्वं कालानवच्छिन्न नास्तिप्रत्ययविषयताकत्वमिति यावत् । तच्छून्य त्वं नास्यात्मकत्वम् । इदमेव' यत्तु कालान्तरेणापि नान्यसञ्ज्ञामुपैति वै । परिणामादिसभूतां तद्वस्तु नृप तच्च किम् ॥ अपक्षयविनाशाभ्यां परिणाम-र्द्धिजन्माभिः । वर्जितश्शक्यते वक्तुं यस्सदाऽस्तीति केवलम् ॥' 'मही घट त्व घटतः कपालिका' इत्यादिषु प्रतिपन्नम् । 'यदस्ति यन्नास्ति च विश्रव-वर्य' इत्यादिविवरणरूपत्वात् । तथाच श्रीमद्भाष्यम्—

'प्रतिक्षणमन्यथाभूततया कादाचित्कावस्थायोगिनो वस्तुनो नास्तिशब्दाभि धेयत्वमेवेत्याह— 'वस्त्वस्ति किमिति । अस्तिशब्दाभिधेयो हि आदिमध्य

पर्यन्तहीनः सततैकरूपः पदार्थः । तस्य कदाचिदपि नास्तिबुद्ध्यनर्हत्वात् अचिद्वस्तु तथाभूतं न किंचिदपि दृष्टचरम् । ततः किमित्यत आह—यच्चान्यथात्वमिति । यद्वस्तु प्रतिक्षणमन्यथात्वं याति तत् उत्तरोत्तरावस्थां प्राप्य पूर्वपूर्वावस्थां जहातीति तस्य पूर्वपूर्वावस्थस्य उत्तरोत्तरावस्थायां प्रतिसन्धानमस्ति अतस्तस्य सर्वदा नास्तिशब्दाभिधेयत्वमेव । तथाह्युपलभ्यत इत्याह— मही घटत्वमिति । कर्मणैव मनुष्यादिभावेन स्तिमितात्मनिश्चयैः स्वभोग्यभूतमाचिद्वस्तु प्रतिक्षणमन्यथाभूतमालक्ष्यते अनुभूयत इत्यर्थः । एवं सति किमप्यचिद्वस्तु अस्तिशब्दार्हमादिमध्यपर्यन्तहीन सदैकरूपमालक्षितमास्ते किम् ? नह्यस्तीत्यभिप्राय इति चिदंशः सदैकरूपतया अस्ति शब्दवाच्यः । अचिदंशस्तु क्षणपरिणामत्वेन नाशगर्भतया नास्तिशब्दाभिधेय' इति च दृश्यते । अस्य चायमभिप्रायः । अस्तीतिप्रयोगे प्रत्ययप्रयोजिका हि सत्ता सततैकरूपतारूपा । सा च चिद्वस्तुमात्रगता । तस्य स्वरूपपरिमाणशून्यतया नामान्तरभजनार्हावस्थावत्त्वाभावात् ॥

अत एव तस्य सकोचविकासरूपावस्थाऽन्तरयोगिज्ञानरूपस्वासाधारण गुणद्वारकं ब्रह्मोपादेयत्वमुपपादितं प्राक् । तस्य च सततपरिणामित्वेन अवस्थाद्वारकानित्यत्वेऽपि स्वरूपतो नित्यत्वात् । 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति अविरोध इत्युक्तम् । अचिद्द्रव्यं तु तेजोबन्नात्मक स्वस्वरूपतः परिणामितया सदैकरूपत्वाभावात् अस्तिशब्दप्रयोगनिमित्तविरहान्नास्तिशब्दाभिधेयता । स्वरूपेणानित्यत्वाच्च नासत्कार्यवादापत्तिः, नवा 'तदेतदक्षयं नित्य जगन्मुनिवराखिलम्' इत्यादेर्विरोधः । तदेवमचिद्वस्तुनोऽपि स्वरूपतो नित्यत्वेऽपि अस्तिशब्दव्यपदेशनिमित्तभूतसततैकरूपताविरहात् तत्प्रतिद्वन्द्विनास्तिशब्दाभिधेयत्वमेवेति ॥

'यदस्ति यन्नास्ति च विप्रवर्य' इत्यनेन भोक्तृभोग्यरूपचिदचिद्वस्तुनी अभिधीयेते । न तु सत्यत्वमिथ्यात्वे, स्वरूपतः सर्वस्यापि नित्यत्वादचा-

[illegible]

अन्यथात्वस्यानुस्यूतत्वोक्तिः प्रदीपप्रवाहादौ च तथात्वस्य प्रत्यक्षसिद्धत्वात् प्रतिक्षणमित्युक्तिः । नैतावता वस्तुनः क्षणिकत्वं जैनाभिमतमुक्तमिति जैनगान्धिर्वि भ्रमितव्यम् । सततैकरूप्याभावस्यैव तेनाभिप्रेतत्वात् । तथा च तत्रैवोपसंहारे उक्तम् । 'किमप्यचिद्वस्तु अस्तिशब्दार्हमादिमध्यान्तरहितं सदैकरूपमास्ति किम् ? नह्यस्तीत्येवाभिप्रायः' इति । तेनात्र क्षणशब्दोऽल्पकालाभिप्रायकः । अत एव 'कादाचित्कावस्थायोगिनोऽचिद्वस्तुनः' इत्युक्तम् । नतु क्षणिकस्येति । अस्ति च क्षणशब्दस्याल्पकालविषयतया तान्त्रिकाणां व्यवहारः । यथा निर्म[redacted]धिकरणे 'नच भूतपूर्वेण योगेन प्रवृत्तिः प्रतिक्षणमग्नेर्विलक्षणत्वात्' इति । नहि जैनाभिमतं क्षणिकत्वमग्नेस्तैरभ्युपगम्यते । महाकवयस्तथैव प्रयुंजते । 'सरोजानां कर्षन्नलिमयमयस्कान्तमणिवत् क्षणादन्तश्शल्यं तपति पतिरद्यापि न रुचाम्' इति, 'क एव जानीते निजकरपटोकोटरगत क्षणादेन ताम्यात्तिमिकरमसौ पास्यति मुनिः' इति च । लौकिकाश्च 'क्षणे क्षणेऽप्ययमेव करोती'ति व्यवहरन्ति । पौनःपुन्य च तदर्थमभिश्रयन्ति । अल्पकालपरिणामित्वेन वा, भूयःपरिणामित्वेन वा क्षणपरिणामित्वोक्तिः क्षणिकतामवगमयति ॥

एतेन एतद्भाष्यमालोच्य क्षणिकत्वमाचितामत्रोक्तम् 'समुदाय उभयहेतुक' इत्यत्र तन्निरस्तमिति कस्यचित्कल्पनमुन्मादविकसितमित्युपहास्यम्

यच्च अवस्थानामेव आगमापायित्वात् क्षणिकत्वं नतु तद्वतो द्रव्यस्येत्याशंक्य अवस्थातद्वतोर्भेदः ? किं वा अभेद इति विकल्प्य आद्ये द्रव्यस्यापि क्षणिकत्वं दुर्वारम् । द्वितीये तु अवस्थानामेवागमापायित्वात् अवस्थावतो मृदादिद्रव्यस्य, ब्रह्मवत् कूटस्थत्वं प्रसज्येतेति दूषणम् तदप्युन्मादविलसितम् । 'यद्वस्तु प्रतिक्षणमन्यथात्वं याति तत् उत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्थां जहाति' इत्यादिना अवस्थानामागमापायित्वस्य अवार्थोक्तेः स्थिरत्वस्य वाऽभिधानेन स्फुटतरैव । अवस्थातद्वतोर्भेदविकल्पानवकाशात् । मध्यस्थाममिमतोऽयमर्थः । यथाऽऽह पतञ्जलिः— 'सुवर्णं कया चिदाकृत्या युक्तः हि पिण्डो भवति । पिण्डाकृतिमुपमृद्य रुचकाः क्रिय-

न्ते रुचकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते पुनरावृत्तस्वर्णपिण्डः पुनरपरया ऽऽकृत्या खदिरांगारसवर्णे कुण्डले भवतः आकृतिरन्यान्या च आकृत्युपम र्द्दैन द्रव्यमंदन द्रव्यमेवावाशेष्यते ' इति । यत्तु एव सति द्रव्यस्य ब्रह्म वत् कौटस्थ्य प्रसज्यत इति दूषण तत्र किमिदमापाद्य कौटस्थ्यम् ? यदि स्थितत्व इष्ट तत् । यदि निर्विकारत्वं तद्विरुद्धम् । अवस्थारूपविकारा श्रयत्वेतूच्यमाने निर्विकारत्वापादनस्य उन्मत्तप्रलपनात् । एव सुवर्णादेरु चकादिसर्वावस्थास्वनुस्यूतस्य आगमापायिनीनां तत्तदवस्थानां च वैल क्षण्ये सर्वलोकावगतेऽपि अवस्थावत् द्रव्य तदवस्थां च दर्शयितुमर्हसीत्यनेन तदेवोन्मत्तत्वं प्रकाशितम् ॥

यदपि 'अवस्था घटशरावादय. अवस्थावती मृदिति चेत् ", इत्याशं क्य तर्हि घटदिनामनित्यत्वं क्षणिकत्वरूप त्वयैवोपपादितमिति दूषण तद-प्युन्मादातिशयविलसितम् । अवस्थावतो मृद्द्रव्यस्यैव घटादिरूपतया केव-लावस्थानां घटादिरूपत्वशङ्कायाः उन्मादविलसितत्वात् । ' मही घटत्व मि ' त्यादौ तु तत्तदवस्थाविशिष्टमृद्द्रव्यस्यैव घटादिरूपत्वमुच्यते । मृत् घट इति सामानाधिकरण्यमन्यथा कथमुपपद्यते ? जलाद्याहरणसाधनत्वं च अवस्थामात्रस्येति यत्किंचिदेतत् ॥

मृदादे. स्थिरत्व च स्वावस्थाभ्य. चिरकालस्थायित्वम् । यद्यपि त स्यापि ' अद्भ्यः पृथिवी ' इति उदककार्यत्वश्रवणात् प्रागवस्था सलिलरूपा तस्य प्रागवस्था तेजोरूपेति एव मूलप्रकृतिपर्यन्त गच्छति । तस्याश्च गुण साम्यावस्थारूपतमोऽवस्था तु प्रागवस्थैव नोत्तरावस्था । अतोऽचिद्द्रव्यं सर्वं प्रागुत्तरावस्थावदपि स्वरूपेण नित्यमिति व्यक्त वेदान्तिनाम् । नै-तावता द्रव्यस्यानित्यता । अवस्थामात्रस्यैवानित्यत्वात् ॥

एव यवादिप्रपञ्चस्य कृत्स्नस्यापि अवस्थात्वेन क्षणिकत्व अवस्था-वत आत्मन एकस्यैव कौटस्थ्यमिति व्यक्तं भवतीति कस्य चित्प्रलापोऽ

प्युन्माद एव । मृत्वादेरवस्थारूपत्वेऽपि द्रव्यस्यावस्थारूपत्वाभावात् । अव-स्थावत आत्मन इति भ्रान्तजाल्पेनम् । अचेत. प्रधानस्यैव स्वरूपपरि णामितया अवस्थावत्त्वात् । आत्मन आकाशादिपरिणामित्वाभावात् । उ पदानत्व तु सूक्ष्मावस्थचिदचिच्छरीरकत्वादित्युक्तम् । एव च ' मही घट त्वम् ' इत्यादिश्लोके घटकपालादीनां सर्वेषामवस्थावत्त्वमुक्तमित्यपि भ्रा-न्तजल्पितमित्यसन्दि-धमेव ॥

एव च सौगतमतासिद्धक्षणिकत्वाभ्युपगमभ्रान्तिपरपराभूतस्य प्रच्छन्न बौद्धस्य ततोऽप्यधिकोन्मादग्रस्तस्य यदन्यत्प्रलपनमश्राव्यमनादरणीयं चेति परीक्षका. पृष्ठत. परिहसन्तीति ॥ एव च क्षणिकपदस्य अस्थिरत्वपरतया व्याख्यानोपहासोऽप्युन्मादविलसित एव । तद्ग्रन्थगतसन्दर्भेण तान्त्रिकव्य-वहारादिना श्लोकस्थवर्तमाननिर्देशानुरोधेन दीपप्रवाहप्रभृतिषु परिणामस्य अन्तरालकालानवगमेन च अतिशैघ्र्याभिप्रायेण तथानिर्देश इति अल्पका-लपरिणामित्वेन सततैकरूपत्वाभावे तात्पर्यमिति सात्वतानां तथाऽभिप्राय वर्णन तु तदनभिमतमपि ताच्छिल्प्येण त्वयैव वर्णनीयमिति यत्किंचिदेतत् ॥

इति श्रीशैलश्रीनिवासकृते विरोधनिरोधे

॥ एकादशो निरोध. ॥



## अथ द्वादशो निरोधः

दिव्यरूपरसस्पर्शगन्धादिगुणभूषितम् ।
यस्य रूपं महद्दिव्यं तस्मै सर्वात्मने नमः ॥

ननु 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥' इत्यादिषु परमात्मनो रूपादिगुणराहित्यमुच्यते । 'साक्षी चेता केवलो निर्गुणश्च' इति निर्गुणत्वमपि तस्योच्यते । अतः सामान्यतो विशेषतश्च निषेधात् न रूपादिमत्त्वं परस्य ब्रह्मणः ॥ किं च ज्ञानानन्दमयत्व 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' इत्यादिषु प्रतिपन्नम् । तस्य स्वप्रकाशैकरसस्य नित्यविभोरचाक्षुषत्वेन 'न चक्षुषा गृह्यते नापि वाचा' इत्यादिषु प्रतिपन्नस्य रूपादिमत्त्व कथमुपपद्यताम् ? कथं वा तथाविधस्याचाक्षुषत्व घटताम् ? न चक्षुरादेरिव रूपादेस्तत्रानुद्भूतत्व शंकार्हम् ; तत्र सजातीयद्रव्यान्तरेषु तदवयवेषु तदारम्भकेषु तेजःत्रसरेण्वादिषु च उद्भूतरूपोपलभवत् अत्र कल्पकानुपलंभात् । प्रत्युत सजातीये चेतने प्रत्यगात्मनि तदभावस्यैव निश्चयात् ॥

एतेन शरीरद्वारकं तदाश्रयणमपि निरस्तम् । तदीयशरीरस्याप्यप्रत्यक्षत्वात् निषेधस्यापि शरीरद्वारकत्वाच्च अशरीरत्वश्रुतिविरोधेन शरीरासंभवाच्चेति चेत्—उच्यते ; निर्गुणश्रुतौ तावत् न गुणसामान्यनिषेधः । श्रुतिप्रमितानामानन्दादिगुणानां सर्वात्मना श्रुत्या निषेधे तदप्रामाण्यप्रसंगात् न स्यात् इति आदौ विहितव्यतिरिक्तविषयता निषेधस्यावधारिता । तदिहापि ज्ञानानन्दादिव्यतिरिक्तविषयोऽयं निषेधः ॥ नन्वेवमपि रूपादिनिषेधकत्व स्यादेवेति चेन्न ; 'सर्वकर्मा सर्वगन्धस्सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः । तस्य एतस्य रूपं यथा माहारजनं वासः यथा पाण्ड्वादिकं यथेन्द्रगोपः' इत्यादिश्रुतिभिः 'नानावर्णाकृतीनि च' इत्यादिस्मृतिभिश्च रूपादीनामपि प्रमितत्वात् । अतोऽशक्त्यनुमित्यादिनिषेधः तद्व्यतिरिक्तविषयो वर्णनीयः । नचात्र ग्रहणाग्रहणयोरिव विकल्पः कल्प्यते । वस्तुनो द्वैरूप्यायोगात् । अतः प्राकृतरूपादिविषयको निषेधः । अप्राकृतरूपादिविषयकश्च विधिः । एवं शरीरविधिनिषेधयोरपि बोद्धव्यम् ॥ ततश्च प्राकृताप्राकृतविषयत्वेन विधिनिषेधयोः हिंसाविधिनिषेधयोरिव न बाध्यबाधकभावः

तथा च श्रीमद्भाष्यम्— 'स्वानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तकल्याणगुणनिधिदिव्यरूपमपि स्वाभाविकमस्ती' ति । श्रुतिश्च —'हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमाक्षिणी ' इति स्मृतिश्च—'प्रशासितारं सर्वेषामणीयांसमणीयसाम । रुक्माभं स्वप्नधीगम्य विद्यात्तु पुरुषं परम ॥ ' इति । एतच्च भगवद्विग्रहादिक शुद्धसत्वात्मकनित्य विभूतिमयामिति व्यक्तम् । प्राचीनग्रन्थेषु एतच्चाप्राकृतमपि भगवद्विग्रहादिक भगवत्सकल्पाधीनत्वादागन्तुकमनागन्तुकं चेति द्विविधम् । आगन्तुक भूभारापहरणार्थं कृत रामकृष्णादिसाङ्क्रिकम नित्यविभूति विकारत्वादनित्यं अनागन्तुकतु स्वाभाविक नित्यं भगवन्नित्येच्छायत्तत्वात् ॥ तथाऽपि रूपादिमदेव । नह्ययमस्तीति नियमः यन रूपादिमत्तदनित्यमिति वा ? अनित्यमपि सर्वं रूपादिमदेवेतिवा ? नित्यानित्यविभागस्य प्रमाणास्त्ररायत्तत्वात् ।

अत एव आकाशस्य नित्यत्वं निरवयवद्रव्यत्वादिना साध्यते । परमाण्वादेर्निरवयवत्त्व च अनेकावयवारब्धत्वप्रयुक्तेन मेरुसर्षपयोः तुल्यपरिमाणत्वप्रसगेन प्रसाध्य तेन तान्नित्यत्व प्रसाध्यते । कथं तर्हि रूपादिमत्वाच्च विपर्ययो हि दर्शनात् ' इत्यत्र रूपादिमतां परमाणूनां अनित्यत्व स्थूलत्वादिप्रसगो वैशेषिकमते दूषणमुच्यते । इत्थमुच्यते । श्रुतिस्मृतिप्रमाणपद्धतिमनालोच्य दृष्टानुसारेण कल्पयतां रूपादिमतां स्वाभिमतनित्यत्वसूक्ष्मत्वनिरवयवत्वादिविपरीतानित्यत्वस्थूलत्वसावयवत्वादिप्रसंग इति तदिदमाह—दर्शनादिति । तथा च श्रीमद्भाष्यम—'परमाणूनां पार्थिवाप्यतैजसवायवीयानां चतुर्विधानां रूपरसगन्धस्पर्शवत्वाभ्युपगमात् अभिमतानित्यत्वसूक्ष्मत्वनिरवयवत्वादिविपरीतानित्यत्वस्थूलत्वसावयवत्वादि प्रसज्येत रूपादिमतां घटादीनां अनित्यत्वतथाविधकारणान्तरारब्धत्वादिदर्शनात् । नहि दर्शनानुगुण्येनादृष्टोऽसकल्प्यमानः स्वाभिमतविशेषे व्यवस्थापयितुं शक्यः । दर्शनानुगुण्येन हि रूपादिमत्त्वं परमाणूनां त्वया कल्प्यत ' इति ॥

एतेन यदत्र केन चिदुक्त भाष्यद्वयस्य विरोधोद्भावन तन्नौम्यादिति

स्फुटम् । दर्शनानुगुण्येन अदृष्टार्थकल्पनायां हि तद्दूषणम् । नहि वयं दर्शनानुगुण्येन भगवद्विग्रहस्य रूपादिमत्त्वं कल्पयाम अपि तु उदाहृतश्रुतिस्मृत्यानुगुण्येन । नच तत्र किमपिदूषणम् । ॥ श्लो ॥ श्रौतेऽपि दृष्टवैजात्ये सन्दिग्धे यस्तु मूढधीः । ब्रह्मापलापात्तस्य स्यात् चार्वाकमतचर्वणम् ॥ ब्रह्मणीव तदीयेऽपि विग्रहादावतश्श्रुतम् । रूपवत्त्वं च नित्यत्वं मुक्तलज्जैरुपेयताम् ॥

यत्तत्र पुनः प्रलपितम्— श्रुतिबलादपि दृष्टाननुगुणं नांगीकर्तुं त्वयाऽपि शक्यम् । तथा सति श्रुतिबलात् ब्रह्मणः परिणामस्य 'श्रुतेस्तु शब्दमूलत्वात्' इति सूत्रेणाभ्युपगन्तुं शक्यत्वात् । तद्विहाय आचिद्वस्तुन परिणामाश्रयणं 'इदं सर्वं यदयमात्मा' 'सर्वं खल्विदं ब्रह्म' इत्यादिश्रुतीनां स्वार्थबाधनं चायुक्तं स्यात् ॥

किं चैवं श्रुतप्रकाशिकोक्तेः विरोधश्च स्यात् । तत्र हि 'श्रुतिबलाद्विरुद्धमपि सेत्स्यतीति शंकित्वा 'तर्हि 'विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति' 'न जायते म्रियते वा विपश्चित्' 'वायुश्चान्तरिक्षं चैतदमृतम्' 'आत्मन आकाशस्संभूतः' 'न नभो न भूमिर्नेमे द्यावापृथिवी' 'अन्तवदेवास्य तद्भवति नास्येष्टापूर्ते क्षीयेते' इत्यादिश्रुत्युक्तस्य आत्मादीनां नित्यत्वानित्यत्वादेरपि श्रुतिप्रतिपन्नतया उभयमभ्युपगन्तव्यम् । ततश्च यथाप्रतिपन्नस्वीकारे मीमांसामात्रवैयर्थ्यं स्यादिति । अनेन हि मानान्तरविरुद्धं श्रुतिबलादभ्युपगन्तुमशक्यमित्युक्तमिति— तदप्यत एव निरस्तम् दृष्टवैजात्यात् । श्रुतिप्रमितत्यागस्य ब्रह्मापलापपर्यवसायित्वेन अयुक्तत्वात् । कुतस्तर्हि ब्रह्मणः परिणामित्वं श्रुतिप्रमितमपि त्यज्यत इति चेत्— भ्रान्तोऽसि । नहि दृष्टवैजात्यात् ब्रह्मणः स्वरूपपरिमाणस्त्यज्यते ? स्वभावपरिणामाभ्युपगमात्। अवस्थान्तरापत्तिरेव हि परिणामः । स्वरूपपरिणाममात्रं तु त्यज्यते । श्रुतिविरोधादित्युक्तं तत्त्वचिद्गतमित्यभ्युपेयते । कुतो ब्रह्म श्रुतमुपादानत्वं अचिद्गतमुन्नीयते । कथं वा तेन ब्रह्मण उपादा

त्वमुपपद्यते ? इत्थं ब्रह्मणस्तावत् जगदुपानत्वं श्रुतम् । ब्रह्म च चिदचिद्विशिष्टमुक्तम् । अतस्तत्कार्यमपि जगत्तादृशमेव । कारणे चिदचितोः सूक्ष्मत्वं कार्ये च स्थूलत्वमिति विशेष. । विशिष्टं चैक वस्तु । ततश्च विशेषणभूतयो चिदचितो' यः स्वभावान्यथाभाव' यश्च विशेष्यभूताचिद्गतस्वभावान्यथाभावः तदुभयमपृथक्सिद्धविशेषगतत्वात् ब्रह्मगतमेवेत्युपादानत्वं निर्व्यूढमिति ॥

' श्रुतेस्तु शब्दमूलत्वात् ' इत्यपि नहि श्रुतमनुपपन्नमपि त्यज्यते अपि तु यथोपपन्नं भवति तथा तद्वर्जनीयम् । अत एव ' यजमान. प्रस्तरः इत्यादौ तत्साध्यादिभिः सामानाधिकरण्यमुपपाद्यते । अत एव ' तत्त्वमसि ' इत्यादिसामानाधिकरण्यं भागत्यागलक्षणयाऽपि त्वयोपपाद्यते । इयांस्तु विशेषः । यदस्मन्मते शरीरशरीरिभावेन उपादानोपादेयभावेन वा ' सर्वं खल्विदं ब्रह्म ' ' तत्त्वमसि ' इत्यादिकं मुख्यं मन्यते ॥

एतेन ' सर्वं खल्विदं ब्रह्म ' इत्यादेः स्वार्थे साधनामिति प्रलपनमुस्मदाद्विलसितं जात्युत्तरं च । चेतनांशे भागत्यागादचेतनांशे चोर. स्थाणुरितिवदारोपितार्थकत्वात् । श्रुतप्रकाशिकाग्रन्थविरोधोपपादनमप्युपहास्यम् । तस्य श्रुतिप्रतिपन्नतामात्रेणाविरुद्धत्वांगीकारोपहासपरत्वादीदृशविरोधो नास्ति । श्रुतिबलादविरुद्धत्वस्याभ्युपगन्तव्यत्वादिति शंक्योत्तरत्वात् ॥

अत एव प्रस्तुतभेदाभेदश्रुत्योरपि पारमार्थिकापारमार्थिकद्विपरत्वेन सोपाधिकनिरुपाधिकविषयत्वेन विभागकल्पनमनुपपन्नम् । तस्य विरोधपरिहारार्थत्वात् विरोधस्य चाभावात् ' इत्युत्तरग्रन्थो दृश्यते । नचास्माभि श्रुतिप्रमितत्वादुभयमंगीक्रियते किंतु विधिनिषेधमर्यादां सर्वतन्त्रसिद्धान्तसिद्धामनुरुध्य विहितव्यतिरिक्तविषयत्वोपपादनेन । इष्ट हि न हिंस्यात्सर्वा भूतानि ' ' न प्रथमयज्ञे प्रव्रज्य न दीक्षितस्स्यात् नाश्नीयात् ' इत्यादौ । ' अग्नीषोमीयं पशुमालभेत ' ' अपि वायोनुद्वा न स्यात् तस्य प्रव्रज्यातो हु

तायां वपायामग्नीषोमीयसंस्थायां यज्ञार्थे वा निर्दिष्टे 'शेषात् भुञ्जीरन्' इत्याद्यनुज्ञातव्यतिरिक्तविषयत्वं तान्त्रिकाणाम्। तदिहापि निषेधः प्राकृतविषयः अनुज्ञानं च प्राकृतविषयमिति गुणशरीररूपादिनिषेधश्रुतीनां प्राकृतविषयत्वं युक्तमाश्रयितुम्। तुल्यसांप्रदायिकयोः अन्यतराप्रामाण्यमितरथा दुर्वारम्॥ तथा हि— महर्षयोऽप्यस्मार्षुः। 'समस्तकल्याणगुणात्मकोऽसौ' इति च। 'हेयाभावाच्च निर्मलम्' 'गुणानामाकरो महान्' इति च। किं च 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इत्यत्र भूतसम्बन्धत्याग एवाभिधीयते इति 'अनु' शब्दादवगम्यते। अतोऽन्यथासिद्धेन तेन न जीवस्य विनाशो वक्तुं शक्यः॥

'वायुश्चान्तरिक्षं चैतदमृतम्', इत्यपि चिरकालस्थायितया अन्यथासिद्धम्। उत्पत्त्यभावाप्रतिपादकं चैव 'आत्मन आकाशस्संभूत' इत्यनेन प्रतिस्पर्धयितुमीष्टे। 'सम्भूत' इत्यत्र 'सं' मिति विशेषणात्तु स्थूलरूपेणोत्पत्तिमभिदधती श्रुतिः सूक्ष्मरूपेण अमृतत्वं न विरुणद्धि। यद्यपि वाय्वन्तरिक्षरूपं स्थूलमेव प्रकृत्यवस्थामादाय तथात्वमविरुद्धम्। 'न नभो न भूमिः' 'नेमे द्यावापृथिवी' इत्यादिकमपि स्थूलावस्थाविशिष्टतया प्रलये अविद्यमानत्वं वदति। 'अन्तवदेवास्य तद्भवति' इति भगवज्ज्ञानव्यतिरेकेण नित्यफलत्वं वदति। 'यो वा एतदक्षरं गार्ग्यविदित्वा' इत्युपक्रमात्। 'नास्येष्टापूर्ते क्षीयेते' इत्यादिकं तु भगवदनुसन्धानपूर्वमविरुद्धम्। अत आपातप्रतीतार्थविश्रान्तहृदयानां सत्यपि विरुद्धतास्फुरणे न्यायानुसन्धानकुशलानां सावकाशत्वनिरवकाशत्वादिविमर्शशीलानां न कश्चिद्विरोध इत्ययमर्थो मीमांसारंभवैयर्थ्यप्रसङ्गात् इत्यनेन व्यंजितः। तदिहापि शरीरत्वाशरीरत्वरूपवत्त्वतदभावसगुणत्वनिर्विकारत्वोपादानत्वादिकं उक्तव्यवस्थया नविरुद्धमिति न किञ्चिदेतत्॥

एतेन यदन्यत्र प्रलपितम्— रूपादिमतोऽपि नित्यत्वं साधयन्ती काचन श्रुतिर्दर्शयत इति— तत् अश्रुतवेदान्तजातस्य बधिरहतकस्य चेत् तथाविधैः

एव अनुमोदनीयम् । 'आदित्यवर्णं तमसः परस्तात्' 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्' 'तस्यैतस्य पुरुषस्य रूपं यथा माहारजनं वासः यथा पाण्डुवादिकं यथेन्द्रगोपः' 'य एष अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' 'पुरुषं कृष्णपिङ्गलम्' 'अमृतो हिरण्मय.' 'हिरण्यदंष्ट्रो बभसेन सूरिः' 'आदित्यमण्डलासीनम्' 'रुक्माभं स्वप्नधगिम्यं विद्यात्तु पुरुषं परम्' 'चक्री जांबूनदप्रभ' 'नीलजीमूतसंकाशः' इत्यादिपरस्सहस्रश्रुतिस्मृतिभिरुद्घोषितत्वात् रूपवत्त्वविग्रहवत्त्वादेः ॥

नच एतत्सर्वमाविद्यकमिति वचनमनुसर्तव्यम् । 'आदित्यवर्णतमसः परस्तात्' इति वाक्यवैयर्थ्यात् । नह्यादित्यः तमसः परस्तात् संभवति । किंच यदि प्राकृतरूपादिवत् काल्पनिकरूपादिमत् तत्स्यात् तदा न चक्षुषा गृह्यते नापि वाचा 'यच्चक्षुषा न पश्यति' 'यद्वाचाऽनभ्युदितम्' 'यन्मनसा न मनुते' इत्यादिभिः तस्य चक्षुरगोचरत्वमुक्तं विरुद्धमापद्यते । 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्' इत्यादि च उपरुध्येत । दिव्यं हि चक्षुः विशुद्धमन एव । 'दैवं चक्षुर्मनः' इति श्रौतव्यवहारात् ॥

एतेन प्रत्युत रूपादिवदनित्यत्वमिति श्रुतिभिरुद्घोषितमिति प्रतिज्ञा च 'यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इत्यादयो हि रूपादियुक्तस्यानित्यत्वमभिदधति ॥

नन्वत्र प्राकृतचक्षुर्विषयस्य अब्रह्मत्वमुच्यते, न चाक्षुषमात्रस्येति चेत् तर्हि 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' 'यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इत्यत्रापि प्राकृतवाङ्मनसविषयस्य अब्रह्मत्वमुच्यत इति स्वीकर्तव्यम् । अर्धजरतीये मानाभावात् । तथा च तदीयमनसः प्राकृतत्वात् परिदृश्यमानवेदानां च प्राकृतत्वात् तद्विषयत्वं ब्रह्मणो न स्यादिति कल्पान्तेऽपि तव मुक्तिः नस्यात् ॥

किं च शिवगीताशास्त्रे— दिव्य चक्षु प्रदास्यामि तुभ्य दशर थात्मज । तेन पश्य भयं त्यक्त्वा मत्तेजोमण्डल ध्रुवम् ॥ न चर्मचक्षुषा द्रष्टु शक्यते मामक मह. ।' इत्यनेन दिव्यचक्षु प्रदानमुक्त्वा तदनन्तरं दिव्यचक्षु. प्राप्तवताऽपि रामेण— विचार्यमाणे तव यच्छरारमाधारभाव जगतामुपैति । तदप्यवश्य मम विद्ययैव पूर्णश्चिदानन्दमयो यतस्त्वम् ॥' इत्यनन दिव्यचक्षुर्विषयस्यापि परमेश्वररूपस्य अविद्याकल्पितत्वेन अनित्यत्वमुक्तम् । तस्मादप्राकृतचक्षुर्विषयत्वेऽपि नित्यत्व दुर्वारम् ॥

किंच प्राकृतचक्षुर्विषयस्य अनित्यत्वमिति त्वदीयस्य गजेन्द्रप्राकृतचक्षुर्विषयत्वात् अब्रह्मत्व हुवार[redacted] । अत एव शिवगीताशास्त्रे—

'शुद्धस्फटिकसंकाश त्रिणेत्रश्चन्द्रशेखरः ।

मूर्तस्त्वमपरिच्छिन्नाकृतिः पुरुषरूपधृक् ॥

अंबया संहितोऽत्रैवं रमते प्रमथैस्सह ॥

इत्यनेन परमेश्वररूपस्य प्रथम प्राकृतचक्षुर्विषयत्वमुक्त्वा तस्यैव सकलजगदाधारस्य विश्वरूपशब्दितस्य अनन्तर दिव्यचक्षुर्विषयत्वं चोक्त्वा, 'तदप्यवश्य मदविद्ययैव पूर्णश्चिदानन्दमयो यतस्त्वम्' इत्यनेन तस्यानित्यत्वमुक्तम् । तस्मात् 'चक्षुषा न पश्यति' इति श्रुतिः चाक्षुपमात्रस्यानित्यत्वं वदतीति युक्तमित्युक्तम्— तदप्युपहास्यम् । 'यश्चक्षुषा न पश्यति' इत्यादिना चक्षुराद्यविषयत्वमात्रप्रतिपादनेन रूपादिमदनित्यमित्यप्रतिपादनात् । नहि तत्र रूपादिमत्ताप्रतिपादकं तदनित्यताप्रतिपादक वा किंचिदस्ति पदम् ? ननु 'इदं' पदमब्रह्मप्रतिपादकमस्तीति चेत्— सत्यम् । 'इदं 'पदं चक्षुरादिग्राह्यबाह्यवस्तुपरम् तस्य च अब्रह्मत्वमुपास्यब्रह्मरूपत्वाभावश्चोच्यते न रूपादिमत्त्वस्य अनित्यताव्याप्यत्वमुच्यते । तेन ब्रह्मणो विश्ववैरूप्यं फलितम् । तथा च समन्वयाधिकरणे श्रीमद्भाष्यम्—

'नेदं यदिदमुपासते' इत्युपास्यत्वं प्रतिषिद्धमिति चेत्—नैवम् । नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते अपि तु जगद्वैरूप्य प्रतिपाद्यते । यदिदं जगदुपासते

नेदं ब्रह्म तदेव ब्रह्म त्वं विद्धि यद्वाचाऽनभ्युदितं येन वागभ्युद्यत इति वाक्यार्थ इति ॥

ननु सत्यं जगद्वैरूप्यं ब्रह्मणः प्रतिपाद्यत इति जगच्च रूपादिमदनित्यं च तद्वैरूप्ये रूपादिशून्यत्वं नित्यत्वं चापाद्यत इति कुतो जगतो नित्यत्वम् रूपादिमत्त्वोक्त्या नित्यत्वविरोध्यनित्यत्वमापाद्यत इति चेत्— नहि तत्र रूपादिमदनित्यमिति व्याप्तिरुक्ता । न वा जगच्छाब्दितं चाक्षुषं वाचिकं सर्वं रूपादिमदनित्यमेव वा सर्वस्यापि स्वरूपतो नित्यत्वात् अवस्थावैशिष्ट्येनानित्यत्वात् । अरूपाणां वाय्वादीनामपि सत्वाच्च । अतो विश्ववैरूप्यं प्राकृतत्वाप्राकृतत्वाभ्यामेव । तदुक्तं महर्षिभिः—
'तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्' इति । 'याऽवसानेऽस्य चतुर्थी अर्धमात्रा सा विद्युमती सर्ववर्णा रूपवदेव' इत्यादिश्रुतिबलाच्च अप्राकृतरूपादिमद्विग्रहवत्त्वं प्रतिपादितम् । चाक्षुषत्वं प्राकृतरूपादिमत्त्वाव्यापकम् । तद्व्यावर्त्यम् चाक्षुषरूपादिमत्त्वमुदाहृतश्रुतिविरोधात् सामान्यतो रूपादिमत्त्वाव्यापकत्वात् वस्तुतो दिव्यचक्षुर्लक्षणीयत्वोक्त्या 'यच्चक्षुषा न पश्यति' इति प्राकृतचक्षुर्विषयत्वाभावपरम् । 'यन्मनसा न मनुते' इत्यपि अविशुद्धमनोविषयम् 'मनसा तु विशुद्धेन' इति श्रुत्यन्तरस्वारस्यात् । तेन प्राकृतरूपीदृश्यावृत्ति अविशुद्धमनोविषयत्वाभावश्च सिद्ध्येत । न रूपादिसामान्याभावः ॥

यत्तु एवं सति अप्राकृतवाग्विषयत्वमपि न सिद्ध्येदिति प्रलपितम्, तत्तुच्छम् । नहि व्यसनितया वयमप्राकृतचक्षुर्विषयतां कल्पयामः किंतु 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्' इति प्रमाणवशात् । नह्येवमप्राकृतं मनः अप्राकृती वाग्वा ब्रह्मविषयिणी क्वचिदाम्नायेत ? तस्मात् 'यन्मनसा' 'यद्वाचाऽनभ्युदितम्' इत्याभ्यां 'यतो वाचो निवर्तन्ते—अप्राप्य मनसा सह' इति श्रुत्यन्तरानुसारात् वाङ्मनसापरिच्छेद्यत्वमुच्यते । तथा च श्रुतप्रकाशिका— 'मनो ब्रह्मेत्युपासीत' इत्यादिना विहितप्रतीकोपासनापास्यानि हि परिच्छिन्नत्वान्नेदं ब्रह्म किंत्वपरिच्छिन्नं ब्रह्म तदेवेत्यर्थः' इति ।

यद्वाचाऽनभ्युदित वक्तुमशक्यमपरिच्छिन्नमिति च । ततश्च त्वदीयमनसः प्राकृतत्वात् परिदृश्यवानवेदानां च प्राकृतत्वात् तद्विषयत्वं ब्रह्मणो नस्यादिति कल्पान्तेऽपि तव मुक्ति न स्यादिति दूषण मूढकृत्यमेवेति सन्तो विदांकुर्वन्तु ॥

यदपि शिवगीतोक्तरीत्या दिव्यचक्षुर्विषयस्याविद्यकत्वेन प्राकृतत्व ' विचार्यमाणे तव यच्छरीरम् ' इत्यादिनोक्तमिति प्रलपितं तत् श्लोकार्थविशदीकरणेन निराकृतम् ॥

एतेन ;इय श्रुतिस्तु आद्वितीयेश्वरस्यानित्यत्वं वदतीति त्वयैव स्वीकृतम् । त्वया हि ब्रह्मणो जगद्वैरूप्यमनया श्रुत्या वर्ण्यते इति समन्वयसूत्रे व्याख्यातम् । जगच्च रूपादिमत् सावयव स्थूलं च । तद्वैरूप्य नीरूपत्वेन निरवयवत्वेन सूक्ष्मत्वेन च स्यात् । रूपादिमत्त्वे तु जगत्सारूप्यमेव ब्रह्मणः नतु वैरूप्यम् । तस्मात् त्वयैवानित्यत्व प्रमाणबलात्स्वीकृतमिति युक्तमिति तदप्युन्मादविलसितमिति स्पष्टमेव । निरस्तं चोक्तप्रकारेण । वैरूप्य हि न नीरूपत्वेन न निरवयवत्वेन सूक्ष्मत्वेन च जगदन्तर्वर्तिनां केषांचिन्नीरूपाणां निरवयवानां सूक्ष्माणां च सत्वात् । किंतु प्राकृत्वाप्राकृतत्वाभ्यां परिच्छिन्नत्वापरिच्छिन्नत्वाभ्याम् । न तावता ब्रह्मणो नीरूपत्वादिसिद्धि. । तस्मादनया श्रुत्याऽनित्यत्व त्वयैव दर्शितमित्युन्मादविलसितम् ॥

एव च ब्रह्मणोऽप्राकृतरूपादिमतो विग्रहस्य श्रुतिशतावगतत्वात् रूपादिमत्व त् वेदे च अनित्यत्वावगाहिश्रुत्याद्यभावात् ' आदित्यवर्ण तमस. परस्तात् ' इत्यादिभि तन्नित्यत्वस्या अप्यवगतत्वात् परमाणूनां तु दृष्टानुसारिण्या कल्पनया रूपादिमत्त्वोक्तादृष्टानुसार्यानित्यत्वादिप्रसंगस्यावर्जनीयत्वात् न तत्र कश्चिद्विरोधः । तेन नित्यनिरवद्याप्राकृतदिव्यरूपविशिष्टवपुष्ट्वोक्तया श्रुतिशतप्रमिते भगवति अलौकिके घटादिन्यायेन अनित्यतायाः प्रत्यक्षेण परमाणुन्यायेन अनुमानेन वा नराशिर कपालशुचित्वस्येवासिद्धेः प्रत्यक्षानुमानयोः न तत्र प्रसरः । लौकिकेषु घटादिषु वस्तुषु सदिति प्रत्य-

क्षेण सत्यत्वेऽवगते 'विश्व सत्यम्, इत्यादिश्रुतिप्रतिसपाते तान्मिथ्यात्वेच प्रत्यक्षादिविरुद्धत्वेनापि श्रुतिवाक्येन अप्रातिपन्ने । 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' इति भगवतैव कण्ठतो निषेधकस्यापि प्रमाणस्याप्रसरात् अयुक्तं जगत्सत्यत्ववर्णनस्याप्रामाणिकत्वात् । श्रुतिसहस्रबाधेन प्रत्यक्षानुमानाभ्यां जगत्सत्यत्ववर्णन श्रुतिबलात् रूपवत्त्वनित्वाभ्युपगमन प्रत्यनुमानबाधन चेत्ययुक्तमिति च उन्मादविलसितमिति दिक् ॥

इति श्रीशैलश्रीनिवासकृते विरोधनिरोधे

॥ द्वादशो निरोधः ॥



## अथ त्रयोदशो निरोधः

अनन्यत् सकलं यस्मात् विश्ववैरूप्यलक्षणात् ।
तस्मै समस्तवपुषे सर्वभावपुषे नमः ॥

ननु विप्रतिषिद्धमेवमुच्यते यत् सर्वविलक्षणः परमात्मा सर्वं च तस्मादन्यदिति । स्वस्मादनन्यस्मात् स्वस्य वैलक्षण्यायोगात् । अनन्यत्वं च 'तदनन्यत्वमारभणशब्दादिभ्य' इत्यत्र व्यवस्थापितम् । शरीरशरीरिणोश्च अनन्यत्वं सर्वसिद्धान्तविरुद्धम् । प्रपञ्चब्रह्मणोश्च शरीरशरीरिभावः त्वयोच्यते । एवं शेषशेषिभावोऽपि सिद्धान्तसिद्धः । नचासावनन्यत्व उपपद्यते । भेदसापेक्षत्वात्तस्य । यथाहुस्तान्त्रिकाः— 'भिन्नानां हि तत्सम्भवति नाभिन्नानाम्' इति । 'भेददूषणापेक्ष शेषिलक्षण' मिति । अत एव हि जविब्रह्मणोरैक्य महता प्रयत्नेन परैस्साधितमपि सूत्रकाराशयविरुद्धमिति । उच्यते— नैतद्विप्रतिषिद्धम् । नहि तदनन्यत्वाधिकरणे प्रपञ्चप्रविष्टचिदचि

द्भ्यां ब्रह्मणः स्वरूपेणैक्यमुच्यते अपि तु कारणात्कार्यस्य अनन्यत्वम् । ननु सत्य कारणकार्ययोरनन्यत्व तत्रोच्यत इति । तत् कारण ब्रह्मैव । कार्य च जगदेव । 'न वियदश्रुतेः' इत्यादिना चिदचितोरेव कार्यताव्यवस्थापनादिति चेत्— सत्यम् कारण कार्य च ब्रह्मैव चिदचिद्विशिष्टमिति स्पष्टमभिहित प्रथमनिरोधे । तच्च अनन्यदेव । सूक्ष्माचिद चितो स्थूलचिदचिद्भ्यां विशेषणाभ्यां तद्विशेष्यस्य च तद्विशिष्याद्नन्यत्वात् । तत्र च विरोधाभावात । ययोर्हि विशेषणविशेष्ययोः शरीरशरीरिभाव. शेषशेषिभाव. परस्परभेदश्च न तयोरनन्यत्वमुच्यते । ययोश्च अनित्यत्व विशिष्टयो न तयोर्भेदश्शरीरशरीरिभावः शेषशेषिभावो वा । अतो न कश्चिद्विरोध ॥

नन्वेवं विशेषणयोश्चिदचितो ब्रह्मकार्यत्व ब्रह्मणस्तत्कारणत्व च न स्यादिति चेत्— न ; सद्वारकपरिणामेन तदुपादेयतया तत्कार्यतया ब्रह्मणस्तत्कारणत्वाविघातात् । कारकान्तराणामिव उपादानत्वस्यापि सद्वारकत्वाद्वारकत्वयोराविरोधात् इत्यन्यत्र प्रपंचितम् ॥

एतेन प्रथमाधिकरण जीवपरयोः देहात्मनोरिवैक्य विरुद्धमित्युक्त्वा तदैक्यवादिनां भ्रान्तत्व च प्रतिष्ठाप्य 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥' इति श्लोकव्याख्यानावसरे 'ज्ञानस्वरूपस्यात्मनो देवमनुष्याद्यर्थाकारेणावभासो भ्रान्तिरि' ति जगद्ब्रह्मणोरनन्यत्वं भ्रान्तिकृतमित्युक्त्या आरभणाधिकरणे जगद्ब्रह्मणोरनन्यत्वं तात्विक श्रुतिविधेयं चेत्युक्तम् । तथाच भाष्यम— 'ऐतदात्म्यमिदं सर्वम्' इति कृत्स्नस्य चेतनाचेतनप्रपञ्चस्य ब्रह्मतादात्म्यमुपदिशति । तदेव 'तत्त्वमसि' इति च निगमयति । तथा प्रकरणान्तरेष्वपि 'सर्व खल्विदं ब्रह्म' 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इद सर्वं विदितम्' 'इद सर्वं यदयमात्मा' ब्रह्मैवेद सर्वम् ' 'आत्मैवेद सर्वमि' त्यनन्यत्वं प्रतीयते । तत्राऽन्यत्व च साध्यते । 'सर्व त परादाद्योऽन्यत्रात्मनस्सर्वं वेद' 'नेह नानाऽस्ति किंच न' 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इति । तथा यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्रत्वस्य सर्व-

मात्मैवाभूत् तत्केन कं पश्येत् ' इत्यविदुषो द्वैतदर्शन प्रतिपादयनन्यत्वमेव तात्विकमिति प्रतिपादयतीति इत्थमकत्रानन्यत्यत्स्य भ्रमसिद्धत्वोक्तेः अन्यत्र श्रुतिविधेयत्वतात्विकत्वोक्तेश्च विरोधास्सिद्ध इति कस्य चित् प्रलपितमपा म् । अनन्यत्यस्य विशिष्टनिष्ठत्वात् । विशेषणविशेष्याभेदस्य भ्रान्तीसिद्ध त्वात् । अनन्यत्वान्यत्वयोरेकनिष्ठत्वाभावेन विरोधाप्रसक्तेः । तथाच श्रीम द्भाष्यम्— ' अतः कार्यावस्थकारणावस्थस्थूलसूक्ष्माचिदचिद्वस्तुशरीर. परम-पुरुष एवेति कारणात्कार्यस्यानन्यत्वेन कारणज्ञानेन कार्यस्य विज्ञाततया एकविज्ञानेन सर्वविज्ञानं समीहितमुपपन्नतरामिति ' ऐतदात्म्य ' मित्यत्रापि शरीरात्मभावेनैव ब्रह्मतादात्म्यमितिवत् ततोऽपि स्वरूपैक्यम् । तथा च श्रीमद्भाष्यम्— ' अतश्चिदचिदात्मकस्य सर्वस्य वस्तुजातस्य ब्रह्मतादात्म्यं शरीरात्मभावेनेत्यवगम्यते । तत ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात् तस्य प्रतिपादकोऽपि शब्दः तत्पर्यन्तमेव स्वार्थमभिदधाति । अतस्सर्वशब्दानां व्युत्पत्त्यवगततत्तत्पदार्थविशिष्टब्रह्माभिधायित्व सिद्धमिति तत्प्रतिपादकोऽपि शब्दः तत्पर्यन्तमेव स्वार्थमभिदधाति । अतस्सर्वशब्द-नां लोकव्युत्पत्त्यवगततत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं सिद्धमिति ' ऐतदा त्म्यम् ' इति प्रतिज्ञानार्थस्य ' तत्त्वमसि ' इति सामानाधिकरण्येन विशेषे उपसंहारः '॥ इति

यस्तु कश्चिदयमुपसहार. ' पुरोडाश चतुर्धा करोति ' इत्यस्य सामान्य शास्त्रस्य ' आग्नेय चतुर्धा करोति ' इति विशेषे उपसहार इव सामान्यशास्त्र-सकोचरूप इति भ्राम्यन् इतरेषा ब्रह्मात्मकत्व न स्यादिति दूषयति— स इत्थं बोधनीय. । यत्र हि सामान्यमनुष्ठानविशेषमपेक्षते तत्रैव सति विशे षशास्त्रे तत्रैव पर्यवसानात् अन्येषामनुष्ठान यथा पशुविधिपुरोडाशचतु-र्धाकरणविध्याः । यत्र तु न तदपेक्षा न तत्रोपसंहारको यथा—
ब्राह्मणो न हन्तव्य ' ' आत्रेयो न हन्तव्य. ' इत्यादौ । अन्यथा आत्रे-यातिरिक्तब्राह्मणहनने दोषाभावप्रसंगात । अतस्तत्र ब्राह्मणस्याहन्तव्यतया ज्ञानवत् इह कृत्स्नस्य ब्रह्मात्मकतया ज्ञानं संपादनमिति न सामान्यस्य

विशेषपर्यवसानमुपसंहारः । किं तर्हि ? कृत्स्नस्य ब्रह्मात्मकत्वात् तदन्तर्गतत्त्वमपि ब्रह्मात्मक इति निगमनं तस्मात्तथेति । नैतावता अन्येषामनभिमतत्वमित्यलं भ्रान्तपुरुषबोधनेन ॥

यत्त्वत्र कैश्चिदुक्तं 'तत्त्वमसि' इत्यत्र तदात्मपरत्वे लक्षणाप्रसंगः त्वपदस्य ब्रह्मपर्यन्तत्वे जीवस्य ब्रह्मशरीरत्वात् शरीरवाचिनां शब्दानां शरीरिणि मुख्यत्वात् अलाक्षणिकत्वेऽपि उत्तमपुरुषानुपपत्तिः । उद्देश्यानुसारित्वात्पुरुषवचनयोरिति — तत्रेदं वक्तव्यम् । सामानाधिकरण्यनिर्देशे हि तादात्म्यं संसर्गः । अतो न तत्पदस्य लक्षणा । तच्च सामानाधिकरण्यप्रतियोगिवृत्तित्वाभिमतसम्बन्धेन भेदविशिष्टं यत् तदन्यत्वरूपम् । तच्च द्वयोः पदयोरेकव्यक्तिविषयतां गमयति । तच्चेह त्वपदस्य परमात्मपर्यन्तत्व एवोपपन्नम् । तथा च तत्पदार्थस्य त्वपदार्थे तादात्म्यसंबन्धेनान्वयान्निर्व्यूढम् 'ऐतदात्म्यमिदं सर्वम्' इत्युपक्रमात् इदंपदार्थोद्देश्यकमिति तथाविधत्वपदार्थोद्देश्यकमिह तत्पदमिति मध्यमपुरुषाविरोधश्च । एतदभिप्रेत्यैवोक्तं श्रीभाष्ये— 'तत्त्वमसि' इत्यत्र उद्देश्यविधेयभावः कथमिति चेत् नात्र किंचिदुद्दिश्य किमपि विधीयते 'ऐतदात्म्य' मित्यनेनैव प्राप्तत्वात्' इति श्रुतप्रकाशिका च—' 'तत्त्वपदयोरपि प्रयुक्तत्वात उद्देश्यविधेयोपादेयविभागाभावाच्च प्रथममध्यमपुरुषयोरविशेषेण प्रसक्तौ निगमनवाक्यस्य प्रापकवाक्यानुरोधित्वस्य न्याय्यत्वात् । तत्र च इदं सर्वमिति निर्दिष्टम् । जगदन्तर्गतचिदचिद्विशेषविशिष्टपरमात्मवाचिनः त्वपदस्य प्रापकवाक्यस्थोद्देश्यवाचिपदवाच्यैकविषयत्वात्तदनुरोधेन मध्यमपुरुषनिर्देश इति ॥

वस्तुतस्तु नायं समस्तानियमः । यत् उद्देश्यानुसार्येव पुरुषवचनप्रयोग इति । सुवर्णं पुनरपर्याऽकृत्या खदिरांगारसवर्णे कुण्डले भवत.' इति पतंजलिप्रयोगविरोधात् । तत्र हि विधेयानुसारी द्विवचनप्रयोगो दृश्यते । तेनेदमवगम्यते । उद्देश्यस्य विधेयस्य वा यस्य तात्पर्यावसानभूमित्वं तदनुसारी पुरुषवचननिर्देश इति । इत्थं च प्रकृते त्वपदस्य तच्छरीर

कपरमात्मपर्यन्तत्वेऽपि 'आत्मेत्येवोपासीत' इत्युपासनस्य उपयोग्युपदेश-रूपस्य 'तत्त्वमसि इत्यादेः परमात्मात्मकत्वस्य त्वपदार्थे चोदयितु प्रवृत्तत्वात् त्वमर्थावसायी अयमुपदेश इति तदनुरोधान्मध्यमपुरुषाविरोधः 'त्वं वा अहमस्मि अहं वै त्वमसि' इत्यादावप्येषैव गतिः । युष्मदस्म त्प्रयोगमात्रे निमित्तत्वे हि तयोर्द्वयो. परत्वादुत्तमपुरुप एव स्यात् । तथाच 'आत्मेतितूपगच्छन्ति ग्राहयन्ति च' इत्यत्र श्रुतप्रकाशिका— 'उभयस्मिन्वाक्ये अहं त्वप्रयोगे सत्यपि अहंशब्दार्थतात्पर्यविवक्षया उत्तमपुरुषशब्दार्थतात्पर्येण मध्यपुरुष इति ॥

एतदुक्त भवति । कर्तृकारकवाचिनि युष्मदि मध्यमः । अस्मदि तथाभूते तूत्तम इति तद्विधायकशास्त्रार्थः । अत एव त्व भवति त्वद्भवति इत्यादौ न मध्यम । युष्मदर्थातिरिक्तस्यैव तत्र चयनकर्तृत्वात् । प्रकृति. कर्त्री न विकृति. । युष्मदर्थो हि विकृतिः तद्भिन्नश्च प्रकृतिः । अत एव च अतित्वविभवतीत्यादौ नमध्यमः । युष्मदर्थमतिक्रमत एव कर्तृत्वात् । तदिहापि श्वेतकेतोः परमात्मकत्व एव तात्पर्यात् त्वपदार्थे, एवास्तिक्रियाकर्तृत्वात युष्मदर्थसामानाधिकरण्यान्मध्यमाविरोधः ॥

यद्यपि त्वपदमपर्यवसानवृत्त्या परमात्मपर्यन्त इति न पुरोवर्तिनि व्यक्तिमात्रे पर्यवसितः । तथाऽपि त्वपदार्थवृत्तिसत्ताकत्वान्न मध्यमविरोध । अत एव पुत्रशिष्यादिकर्तृत्वेऽपि त्वमेव कृतवानसि इत्यादिर्हि पुत्राद्यभिप्रायः प्रयोग उपपद्यते । अत एव 'अहं मनुरभवं सूर्यश्च, अहं कक्षीवामृषिरास्मि' इत्यादौ अहमादिपदानां परमात्मपर्यन्तत्वेऽपि उत्तमपुरुषदर्शनम् ॥

अत एव सबोद्धव्यवस्तुमात्राविषयको मध्यमपुरुप इति नियमोऽपि निरस्तः । भगवच्छब्दप्रयोगे तदभावेन व्यभिचाराच्च । अतस्तर्हि अवाच्यकर्तृवाचिनि युष्मदि मध्यम इतीहापि त्वपदस्य परमात्मपर्यन्तत्वेऽपि न विरोध इत्यन्यत्र विस्तरः ॥

तदेव कार्यकारणयोरनन्यत्वस्य आरंभणाधिकरणविषयत्वात् स्वरूपाभेदस्य भ्रान्तिसिद्धत्वोक्तेः न कोऽपि विरोध. ॥ अत एव 'आत्मैवेदं सर्वम्' 'पुरुष एवेदं सर्वम्' इत्यादयोऽपि निर्देशा उपादानोपादेयभावेन शरीरशरीरिभावेन वा उपपन्ना न स्वरूपैक्यमवगमयन्ति ॥

एव 'सर्वं त परदाद्योऽन्यत्रात्मनस्सर्वं वेद' इत्याद्यन्यत्वनिषेधोऽप्युक्तविधानन्यत्वनिषेधोपष्टंभक एव । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपक्रमानुसारादित्थमेव युक्तम् । नह्यन्यज्ञानादन्यज्ञानं संभवति ? नवा सादृश्यप्राधान्याभ्यां तत् ज्ञानं मुख्यम् । सादृश्यासिद्धेश्च । 'नेह नानाऽस्ति' इत्यत्रापि अब्रह्मात्मकवस्तु किमपि नास्तीत्युच्यते । विस्तरस्तु अस्मत्कृतगुरुगुणदर्पणे ॥ 'यत्र हि द्वैतमिव भवति' इत्यत्रापि उक्तविधमेवानन्यत्वं विषय । न स्वरूपैक्यं बाधात् । तद्भेदप्रतिपादकपरस्सहस्रप्रमाणविरोधात् । 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते' 'पृथगात्मानं प्रेरितारं च मत्वा' 'ज्ञाज्ञौ द्वावजावीशनीशौ' 'प्रधानक्षेत्रज्ञपतिर्गुणेश.' इत्यादयो हि कण्ठत. भेदं प्रतिपादयन्ति । अतः कार्यकारणभावप्रयुक्तमेवानन्यत्वम् । भेदस्तु स्वाभाविकस्वरूपप्रयुक्त इति न कश्चिद्विरोधोऽनुन्मत्तहृदयानाम् ॥

यत्तु ब्रह्मण. अचिद्रूपस्वरूपपरिणामानभ्युपगमात् कथं ब्रह्मणो जगत् कार्यं स्यात् ? कथं चिदनन्यत्वं स्यादिति दूषणम् । तदप्युन्मादकृतम् । अवस्थान्तरापत्तिरूपपरिणामस्य सद्वारकस्याद्वारकस्य च ब्रह्मणि प्रागुपपादनात् । चिदचितो. परमात्मशरीरत्वात् तद्द्वारकमवस्थाऽऽश्रयत्वं मुख्यम् । नचैतावता ब्रह्मणो जडत्वादिप्रसङ्ग. । नहि व्यसनितया वयं सद्वारकावस्थाऽऽश्रयत्वं कल्पयाम. । अपि तु श्रुतत्वात् दृष्टत्वाच्च । श्रूयते हि ब्रह्मण उपादानत्वं निमित्तत्वं च 'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' इत्यादौ । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽऽदिभि. सामानाधिकरण्यनिर्देशैश्च तदुपपद्यते । सर्वशरीरित्वादिभिश्च तदेवोत्तभ्यते । जीवस्य शरीरद्वारकमवस्था

ब्रह्मावगतम् ' इति ॥

एतदुक्तं भवति । ' औपनिषदः पुरुष ' इत्याद्यसाधारणनिर्देशैः परस्य ब्रह्मणः स्वरूपं स्वभावश्च वेदान्तैकवेद्यतया अवगम्यते । तत्रचापुरुषार्थगन्धशून्यता अवगता । नच तद्दृष्टसाधर्म्येण अन्यथात्वशंकार्हा । अतिप्रसंगात् । स्वभावतो निरस्तनिखिलदोषस्य च नान्यसंबन्धात्तद्विपर्ययः । स्वभावविरोधात् । नहि वस्त्वन्तरसंपर्कमात्रात् अपुरुषार्थसंबन्धेऽपहतपाप्मत्वादि घटते ॥

ननु जीवस्यापि अपहतपाप्मत्वादिस्वभावः प्रजापतिवाक्येनावगम्यते । तथाऽपि शरीरसंबन्धादपुरुषार्थसंबन्धश्चेष्यते । तद्वदिदमपि स्यादिति चेत्— वैषम्यान्नैतद्युज्यते । जीवस्यापहतपाप्मत्वादिस्वभावस्य संसारावस्थायां प्राचीनकर्मफलानुभवाय तिरोधापितः परमात्मनस्संकल्पेनेति ' पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ' इत्यत्रोक्तम् । न तथा परमात्मनस्तथाविधस्वभावः कदाऽपि केनापि तिरोहितः ? अत एव परमात्मनस्स्वातन्त्र्यं जीवात्मनः पारतन्त्र्यं चाम्नायते । ' ज्ञाज्ञौ द्वावजावीशनीशौ ' इति । अत एव परमात्मध्यानात्तत्संगः नाद्विभेदाच्च तस्प्राप्तिरपि श्रूयते । ' यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयगतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति ' इति ॥

ननु देहसंबन्धादेव जीवस्यापि तत्तिरोधानम् । तद्यदि परमात्मनोऽपि तत्संबन्ध इष्यते तद्वदेव तत्तिरोधानमपि दुर्वारमिति चेन्न ; तत्संबन्धेऽपि तस्य तदभावश्रुतेः । ' द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ' इति उभयोरविशेषेण देहसंबन्धमुक्त्वा ' तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योभिचाकशीति ' इति जीवस्य स्वाभाविकस्वरूपतिरोधानमूलकं कर्मफलानुभवमुक्त्वा परमात्मनः अभिचाकशीतात स्वभावातिरो

रूपानन्यत्वतदभावाभ्यां वैलक्षण्यादयुक्तमिति दिक् ॥

इति श्रीशैलश्रीनिवासविरचिते विरोधनिरोधे

॥ त्रयोदशो विरोधोद्धारः ॥

# अथ चतुर्दशो निरोधः

मूर्तामूर्तादिभेदेन रूपं यस्य विधीयते ।
श्रुतिभिस्तमहं वन्दे कारणं हरिमव्ययम् ॥

यत्तु तदनन्यत्वाधिकरणे जगतो ब्रह्मानन्यत्वमुक्तं 'प्रकृतैतावत्त्वं हि प्रतिषेधाति' इत्यत्र जगतो ब्रह्मविशेषणत्वं श्रुतिविधेयमित्युक्तम् । विशेषणविशेष्यभावश्च भेदगर्भ इत्यन्यत्वं तत्रोक्तमिति केन चित्प्रलपितम्— तन्न । स्वरूपतो भेदस्य विशिष्टाभेदस्य च प्रतिपादनेन भिन्नविषयतया विरोधाप्रसक्तेः । विशेषणविशेष्ययोः गोत्वाश्वत्वयोरिव आश्रयभेदकत्वादित्युन्मत्तविलसितम् । एकस्यैव कंचित्प्रति विशेषणत्वस्येव कंचित्प्रति विशेष्यत्वस्यापि दर्शनेन विशेषणविशेष्यत्वयोः गोत्वाश्वत्वयोरिव असहवृत्तित्वाभावात् । यत्प्रति यद्विशेषणं तत्प्रति तस्य विशेष्यत्वं विरुद्धमिति चेत् किंचातः । नहि ब्रह्म प्रति विशेषणस्य तत्प्रति विशेष्यत्वमपि ब्रूमः येन विरोधः । ननु यत्प्रति यद्विशेषणं तत् तद्भिन्नमिति अनन्यत्वं विरुद्धमिति चेत् सत्यम् नहि विशेष्यविशेषणयोरनन्यत्वम् किंतु विशिष्टयोः । नहि तयोर्विशेषणाविशेष्यभावः । अतो यत्किंचिदेतत् ॥

इति श्रीशैलश्रीनिवासकृते विरोधनिरोधे

॥ चतुर्दशो निरोधः ॥



# अथ पञ्चदशो निरोधः

अन्तरात्मतया तिष्ठन् सर्वस्मिन्नपि यः प्रभुः ।
दोषैर्नलिप्यते तस्मै परस्मै ब्रह्मणे नमः ॥

ननु कर्दमयह्रदप्रविष्टस्य पंकसांकर्याभावप्रतिज्ञावदिदमुपहास्यत्वम् । तथा हि— सर्वं जगत् गुणत्रयमोहजनकगुणत्रयमयत्वात् दोषनिदानम् । तत्सम्बन्धिनि शरीरिणि च दोषभाक्त्वमनुभवसिद्धम् । तद्यदि परमात्माऽपि जगदन्तरात्मतया तत्सम्बन्धो स्यात् तदा जीववदेव तत्प्रयुक्तापुरुषार्थभाक्त्वमपि तस्य दुर्वारं स्यात् । प्रकृतेशत्त्वाधिकरणे ब्रह्मणो जगत् विशेषणतयोक्तम् । तत्कथं तस्यापुरुषार्थसंबन्धो न स्यात् ?

नच ‘ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ’ इत्यत्र जीवपरमात्मनोः कर्मसंबन्धासंबन्धाभ्यां सुखदुःखसंबन्धासंबन्धौ उपपादितौ अतः न परमात्मनस्तत्प्रसाक्तिरिति वाच्यम । कर्मापि न साक्षाद्देहसंबन्धादिकारणम पितु देहसंबन्धजननद्वारा । तस्माद् परमात्मनोऽकर्मवश्यत्वेऽपि अपुरुषार्थहेतुजगत्संबन्धः स्यादेवापुरुषार्थसंबन्धः । दृश्यते हि यः प्रचुरपापवशादन्धकूपपातितः यश्च तदुद्धारणायापापोऽपि प्रविष्टः तयोरुभयोरपि पंकसंकरः । तस्माज्जगच्छरीरकत्व परमात्मनोऽङ्गीकुर्वतां अपुरुषार्थसंबन्धोऽवर्जनीय इति चेत्— अत्र यद्वक्तव्यं तत्सर्वं सूत्रकारैरेव ‘ न स्थानतोऽपि परस्योभयलिंग सर्वत्र हि ’ इत्यत्रोक्तम् । तथा हि तत्र श्रीमद्भाष्यम्— न पृथिव्यादिस्थानतोऽपि परस्य ब्रह्मणोऽपुरुषार्थगन्धस्संभवति कुतः ? सर्वत्र श्रुतिस्मृतिषु परं ब्रह्म उभयलिंगमुभयलक्षणमभिधीयते । निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वलक्षणोपेतमित्यर्थः । ‘ अपहतपाप्मा विरजोऽविजिघत्सस्सत्यकामस्सत्यसंकल्पः ’ ‘ समस्तकल्याणगुणात्मकोऽसौ शक्तिलेशात् धृतभूतसर्गः । तेजोबलैश्वर्यगुणावबोधसुवीर्यशक्त्यादिगुणैकराशिः ॥ परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे । ’ ‘ समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ’ इत्यादिश्रुतिस्मृतिभ्यः उभयलक्षणं हि

ऽऽश्रयत्वं च दृश्यते । 'बालोऽयं स्थविरोऽयं देवदत्त' इत्यादिव्यवहारात् स्थूलत्वकृशत्वादिव्यवहाराच्च । विशिष्टं ब्रह्मवोपादानमुपादेयं चेत्युक्तम् । नैवं जडत्वादि क्वचित् श्रूयते दृश्यते वा प्रत्युत तद्विरोध्यजडत्वं 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादावाम्नायते । अतोजडत्वादिप्रतिबिंबकथनमुन्मादबिलसितमेव । कल्पितत्वेनानन्यत्वामाशक्य मिथ्यात्यंप्रसगेन निराकरणमनभ्युपगतांशदूषणत्वात्ताहशमेव ॥

यदपि जीवस्य अनन्यत्वं कार्यत्वकल्पितत्वयोरनगीकारादयुक्तमित्युक्तं तदप्युन्मत्तप्रलपितम् । अचित्तुल्यस्वरूपान्यथाभावान्यथाभावाभ्युपगमेऽनभ्युपगमेऽपि स्वभावान्यभावात्मकावस्थाऽन्तरयोगितया कार्यत्वांगकिारात् ॥

यदपि शरीरत्वेनान्यत्वत्वमनन्य वमाशंक्य शरीरशरीरिणोरनन्यत्वांगीकारेण निराकरण तदप्यारम्भणाधिकरणाविषयत्वात् उन्मत्तविलसितमेव अत एव जीवब्रह्मस्वरूपानन्यत्ववादनां स्वरूपतो भेदमंगीकृत्य कार्यत्वकारणत्वादिना विशिष्टानन्यत्वमाद्रियतां च भेदः सुस्पष्टं इति तयोरैक्यवादेन दूषणं तन्निराकरणं तत्तदुपाधिब्रह्मजीववाददूषणपरभाष्याविरोधेन दूषणं चायुक्तमिति स्पष्टमेव । जीवब्रह्मणोरौपाधिकमन्यत्वं स्वाभाविकमनन्यत्वं च तदिष्टम् । तच्च स्वरूपैक्यमेव । तत्र च उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावात् निरवयवस्याखण्डवस्तुनो ब्रह्मण एव औपाधिकसंबन्धात् ब्रह्मस्वरूपस्यैव हेयाकारपरिणामात् । शक्तिपरिणामाभ्युपगऽमेपि शक्तिब्रह्मणोरनन्यत्वात् जीवब्रह्मणोः कर्मवश्यत्वापहतपाप्मत्व दिव्यवस्थावादिन्य चिद्ब्रह्मणोश्च परिणामापरिणामवादिन्यः श्रुतयो व्याकुलीभवेयुरित्यादिदूषणं च युक्तमेव । विशिष्टानन्यत्वं ह्यस्मदिष्टं तत्र च नोक्तदूषणसाम्यं जगतः कल्पितत्वेन ब्रह्मणोऽधिष्ठानत्वेन अन्यत्वं वदतां सत्यमिथ्यार्थसांकर्यात्परस्परधर्मसंकरश्च उक्तो नास्मन्मत आपतति । तदनंगीकारादेव । काल्पनिकानन्यत्वस्य धर्मसंकरहेतुत्वे तात्विकानन्यत्वस्य सुतरां तद्धेतुत्वमिति सांकर्यकल्पनमपि स्व-

धानात् कर्मफलाननुभव उच्यते । अतो न देहसंबन्धमात्रात् पुरुषार्थप्रसक्तिगन्धः ।

ननु गुणत्रयमयत्वात् स्वसंबन्धिनि जीवे सुखदुःखादि जनयत् जगत् कथं स्वसंबन्धिनि परमात्मनि न तत् जनयेत् ? स्वभावविरोधात् नहि वस्तुनो द्वैरूप्यं कस्य चिदिष्टं क्वचित् दृष्टं च ? इति चेत्— न, हेतुवैशेष्यादविरोध इत्युक्तत्वात् ॥ एतदुक्तं भवति मधुरस्वभावस्यापि क्षीरादः पित्ताद्युपहतानुपहतपुरुषभेदात् माधुर्यानुपलम्भतदुपलम्भौ । न तावत वस्तुनो द्वैरूप्यम् । एवं चेद परमात्मनोऽपुरुषार्थसंबन्धरूपं वा आस्त ? यथोक्तम्— 'नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम । वस्त्वेकमेव दुःखाय सुखाय गमनाय च ॥ कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः । तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ॥ तस्मात् दुःखात्मकं नास्ति न च किंचित्सुखात्मकम् ॥' इति च ॥ तथा च श्रीमद्भाष्यम्—
'न कचिद्वस्त्वपि स्वभावतोऽपुरुषार्थरूपं कर्मवश्यानां तु कर्मस्वभावानुगुण्येन परमपुरुषसंकल्पादेकमेव वस्तु कालभेदेन सुखाय दुःखाय च भवति । वस्तुस्वरूपप्रयुक्तत्वे तु तादृश्ये सर्वं सर्वदा सुखाय दुःखायैव वा स्यात् । नचैवं दृश्यते' इति । अत पुरुषकर्मानुगुण्यप्रयुक्तमपुरुषार्थरूपत्वमतथाविधस्य परमपुरुषस्य कथमपुरुषार्थसंबन्धं कल्पयेत् ? अपि तु विचित्रानियमनरूपलीलारसायैव भवेत् । एतच्च 'य पृथिव्यां तिष्ठन्' इत्यादिषु प्रतिपर्याय 'अन्तर्याम्यमृतः' इत्यत्र तत्वोक्त्यैव अवगम्यते ॥

एतेन यत् केन चिदुन्मत्तेन जगदन्तवर्तित्वेऽप्यपुरुषार्थसंबन्धाभावं वदतः जगत्सम्बन्धाभाव एव उक्तस्स्यात् । तथा च जगद्वैशिष्ट्य प्रतिपादयता 'प्रकृतैतावत्त्वा' ऽधिकरणेन अपुरुषार्थसंबन्धाभावप्रतिपादकस्य 'न स्थानतोऽपीत्यस्य विरोध इत्यभिहितम् तत् उन्मादप्रयुक्तमनुपादेयम् ॥

एतेन अपुरुषार्थसंबन्धं प्रतिषिध्य तदितरजगत्संबन्धविधाने च ब्रह्मण. परिच्छिन्नता स्यादिति तदीयजल्पनमपि निरस्तम् । पुरुषार्थापुरुषार्थ

जगद्द्वयाभावेन असंभवदुक्तिकं च ॥ जीवान् प्रत्यपुरुषार्थहेतौ जगति अ कर्मवश्यपरमात्मकृततथाविधत्वांगीकारेण अनन्यत्वाविरोधात् ॥

'सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेद' इति श्रुतिविरोधोद्भावनमपि अत एव निरस्तम् । सर्वस्य जगत परमात्मसंबन्धमंगीकृत्य तत्प्रयुक्ता पुरुषार्थगन्धाभावमात्रस्यैव प्रतिपादनात् । जगत स्वतोऽपुरुषार्थत्वाभावोपपादनाच्च ॥ अत एव पृथिव्यादीनामचितां जीवानां च संबन्धमभ्युपगम्य तद्गतापुरुषार्थदुर्गन्धदुःखित्वावारणमशक्यमिति तदभाव वदता जगतस्संबधाभाव उक्तस्स्यादिति जल्पनमपि परास्तम् । तत्तदुभयोरेककारागृहस्थत्वेऽपि अनुभववैलक्षण्यस्य प्रत्यक्षत्वेन तत्संबधमात्रम् । तत्प्रयुक्तदुःखभाक्त्वासिद्धेः । पुरुषार्थापुरुषार्थयोः वस्तुस्वभावायत्तत्वाभावस्य प्रागुदाहृतप्रमाणासिद्धत्वाच्च ॥

ननु 'एवमेवामुत्र पुण्यचितो लोकः क्षीयते' 'नाल्पे सुखमस्ति' 'अतोऽन्यदार्तम्' 'अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्' 'यज्ज्ञात्वा मोक्ष्यसेऽशुभात्' 'स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः' इत्यादिभि कृत्स्नस्य प्रपञ्चस्यापि अपुरुषार्थत्वमुच्यते अतः कथं तस्य स्वभावतोऽपुरुषार्थत्वाभाव उच्यते इति चेत्– सत्यम् , 'पुण्यचितः' इत्यादिना कर्मसंपादितत्वेनैव क्षयिष्णुत्वप्रतिपादनेन वास्तवपुरुषार्थत्वानुक्तेः । अब्रह्मात्मकत्वेन अनुसंहितानामेव अनित्यत्वमर्त्यत्वासुखित्वाद्युपपादनात् । अत एव 'भजस्व माम्' इति तद्व्यावृत्तये तदुपादानं कर्तव्यतयोच्यते ॥

अत एव 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति सर्वात्मकत्वमुपास्यगुणतया श्रूयते । मनोमयत्वप्राणशरीरत्वादयश्च तद्विशेषरूपा अभिधीयन्ते । अकृत्स्नोपासनं च निषिध्यते। 'न स वेद अकृत्स्नो ह्येष' इति । अतोऽब्रह्मात्मकवस्तूपासनं दुःखाय ब्रह्मात्मकवस्तूपासनं सुखायेत्यवगम्यते । अतः ब्रह्मात्मकत्वोपासनरहितान् प्रतीदं सर्वमशुभमिति तत्त्यागोऽत्र प्रतीयते । न तु वास्तवमशुभत्वम् ॥ कुतस्तर्हि अपुरुषार्थप्र-

साक्तिः ? येनेह निषिध्यत इति चेन्न, जगत्परमात्मनोरपि जगत्संबधा त्प्राप्तं भवादृशोन्मत्तजनापादित प्रतिषिध्यत इति गृहाण । एतादृशाश्च 'अस्थूलमनणु' इत्यादयः पारेपरार्धे प्रतिषेधा दृश्यन्ते ॥

यत्तु कीदृशस्सम्बन्धोऽत्र निषिध्यते संयोगस्समवायो विषयविषयि भावो वेति विकल्प्य, नाद्यः संयोगस्यावर्जनीयत्वात् । निरवयत्वात् तत्सं योगो नेति चेत्— त्वदीयब्रह्मणस्सावयवत्वात् । निरवयत्वे जीवस्यापि निर- वयवत्वात् संयोगो नस्यात् । न द्वितीयः । अयुतसिद्धत्वेन समवायाव- श्यंभावात् । नान्त्यः । त्वदीयब्रह्मणो जगदान्ध्यप्रसंगात् । स्वस्वामिभा वप्रतिषेधे ईश्वरत्वमेव न स्यात् । किंच अत्र संबन्धः जीवस्यापि प्रतिषि ध्यते न वा ? आद्ये अपसिद्धान्तः । द्वितीये तत्समानदेशस्य ब्रह्मणोऽपि तत्प्रसङ्गो दुर्वारः व्यवस्थापकाभावात् । 'अदृष्टानियमात्' 'अभिसन्ध्या दिष्वपि चैवम्' इति अदृष्टादेरनियामकत्वाभिधानादिति प्रलपन तदपि उन्मादविलसितमेव । 'यस्य पृथिवी शरीरम्' इत्यादिना चिदचितोर्द्वयो रपि शरीरत्वोपपादनेन शरीरशरीरिभावात्मक एव संबन्ध एव श्रुतिप्रति- पन्न इति अध्यवस्य च अनिवेधात् संयोगो वा तत्तत्सबन्धोऽस्तु ।— यत्तु निरवयत्वात्संयोगानुपपत्तिरिति चेन्न, त्वदीयब्रह्मणः सावयत्वादिति तत्राक्षेपस्तावदसमीचीन. निरवयत्वेऽपि निराकरणप्रयासेनेति दिक् ॥

इति श्रीशैलश्रीनिवासविरचिते विरोधनिरोधे

॥ पञ्चदशो निरोधः ॥



## अथ षोडशो निरोधः

शरीरित्वेऽपि निर्दोषो वैशिष्ट्यात्कारणं भवन् ।
अनन्यो यः परस्तस्मै नमो भगवतेऽस्तु नः ॥

यस्त्वात्मनि निर्दुष्टत्वानन्यत्वमिति भ्राम्यति स इत्थ उक्तप्रकारेण प्रतिवक्तव्यः । 'न स्थानतोऽपि' इत्यत्र तत्तत्पृथिव्यादिसंबन्धे प्रतिपर्यायमत्र तत्त्वोक्तेः तत्प्रयुक्तदोषसबन्धगन्धशून्यत्वं अकर्मवश्यत्वादित्युक्तम् । तदनन्यत्वविशिष्टस्व कारणत्वमभ्युपेत्य कारणात्कार्यस्य वस्त्वंतरत्वाभावेन समर्थितम् । अतो न कश्चिद्विप्रतिषेधः । जगद्वैशिष्ट्यप्रयुक्तदोषनिषेधेऽपि जगद्वैशिष्ट्यानिषेधात् ॥

यस्तु कश्चिदुन्मत्तो ब्रवीति एतन्मते जीवादपि ब्रह्मणो निकर्षः प्राप्नोति अस्यह्यपुरुषार्थसंबन्धमात्रम् । ब्रह्मणस्तु तत्तादात्म्यमिति चण्डालस्पृष्टब्राह्मणात् निरन्तरसहचारिणो ब्राह्मणस्येवेति तत्तथाविधस्यैव वचनमनुपादेयम् । जगत्पतौ पुरुषार्थत्वाभावेन तत्संबन्धमात्रस्यापुरुषार्थत्वाभावात् । कर्मवश्यत्वाभावेन ब्रह्मण्यपुरुषार्थगन्धाभावाच । ब्रह्मैवाज्ञानावृतं सर्वानपुरुषार्थानश्नुते इति वदतस्तवैव मते चण्डालगृहं प्रविश्य तद्भोगान् भुञ्जानस्य ब्राह्मणस्य चण्डालत्वमिव ब्रह्मणोऽपि तथात्वमिति निजमुखदोषस्य निर्मलेषु दर्पणेष्वर्पणम् । अतो मूर्खस्य भाषणप्रशिष्य इति सन्तः परिहसन्ति ॥

इति श्रीशैलश्रीनिवासविरचिते विरोधनिरोधे

॥ षोडशो निरोधः ॥



## अथ सप्तदशो निरोधः

चिदचिद्वस्तुवपुषे सर्वधर्मानुपप्लुषे ।
समस्तपदवाच्याय विष्णवे जिष्णवे नमः ॥

स्थितं तावत्। अपृथक्सिद्धविशेषणवाचिनां पदानां विशेष्यपर्यन्तत्वमेव मुख्यत्वम्। गोनीलादिपदेषु जातिगुणादिनिमित्तकेषु गोनैल्यादीनां विशेषणानां द्रव्य प्रत्यपृथक्सिद्धत्वान् तन्निमित्तका हि गवादिशब्दा. व्यक्तिगुणपर्यन्ता गौर्नीलस्यादिवदिति। नहि तत्र लाक्षणिकत्वं गौणत्वमक्यशंकम्। शक्यसंबन्धाद्यपरिज्ञानेऽपि तत्प्रतिपत्तेः। गोत्वनैल्यादिशब्दानां प्रवृत्तिनिमित्तापरपर्यायभावप्रत्ययान्तानां जातिगुणादिपरतायाः तथात्वानिश्चायिकायाः सत्वाच्च। नहि तद्वृत्तिधर्ममात्र भावः। गोत्वनैल्यादिपदात् तद्वृत्तिद्रव्यत्वाद्यप्रतीतेः। शरीरेऽपि तत्पदे वा पृथक्सिद्धविशेषणम्। तद्वाचिनां च ब्राह्मणादिपदानां ब्राह्मणोऽहमित्यादौ शरीरिपर्यन्तत्वं दृष्टम्। न्यायसाम्यात् सर्वं च चिदचिद्वस्तुजातं परमात्मनश्शरीरमिति अन्तर्यामिब्राह्मणादिषु प्रसिद्धम्। तच्च यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे धारयितुं नियन्तु च शक्यं तत्तस्य शरीरमिति शरीरलक्षणलक्षितत्वात् मुख्यत्वमिति तत्वमार्ताण्डे उपपादितम् ॥

ननु तत्पदप्रवृत्तिनिमित्ताश्रयत्व तत्तत्पदवाच्यतायां नियामकम्। तच्च साक्षात्तदाश्रयत्वमिव परंपरया तदाश्रयत्वस्य तद्वाच्यतानिमित्तत्वे परंपरया घटत्वाश्रयस्यापि भूतलस्य घटशब्दवाच्यताप्रसंगात्। अत एव ब्राह्मणोऽहमित्यादेरपि न मुख्यत्वम्। ब्राह्मणपदप्रवृत्तिनिमित्तब्राह्मणत्वादेः शरीरवृत्तित्वेऽपि अहंप्रत्ययविषय आत्मन्यवृत्तेः। ब्राह्मण साक्षात्तदाश्रयत्वेन तद्वत् जडत्वादिदोषप्रसंगः॥ अतः कथं सर्वशब्दवाच्यत्वामात चेदुच्येत। अस्ति तावत् समानाधिकरणः प्रयोगः गौः शुक्ला ब्राह्मणोऽहमित्यादिः ॥

सामानाधिकरण्यं च शाब्दं भिन्नप्रवृत्तिनिमित्तानां पदानां एकस्मिन्नर्थे वृत्तित्वरूपम्। तच्च न सिंहो देवदत्त इतिवत् गौणत्वगर्भम्। अनुपपत्त्यप्रतिसन्धानेऽपि प्रतीतेः प्रयोगाच्च। नायं सिंहः किंतु तत्सदृशः इतिवत् विशेषदर्शिनामपि नायं ब्राह्मणः नायं नीलः कदाप्रतीतेश्च। अतः

अतो एकार्थवृत्तित्व मुख्ययैव वृत्त्या वाच्यमिति गौणशरीरिवाचिशब्दा-नां तन्निमित्तकतया तत्संबान्धिनि गुणिनि शरीरिणि च मुख्यत्वमंगीकर-णयिमिति ॥

इदं तु विचारणीयम् । गुणशरीरवाचिशब्दानां गुणिनि शरीरिणि च न प्रत्येक शक्तिः किंतु गुणगुणिनोश्शरीरशरीरिणोरेकैव शक्तिरिति के-चित्तावन्मन्यन्त । एकैव शक्तिः एकेनैव निमित्तेन साक्षात्परंपरासबन्धा भ्यां गुणे गुणिनि शरीरे शरीरिणि च वृत्तिसवन्धे निमित्तद्वयकल्पने श-क्त्यानन्त्यप्रसगात । नच परपरया तदाश्रयत्व पदवाच्यतायां न निमित्त म् । घटद्वारा घटत्वाश्रयस्य भूतलस्यापि घटशब्दवाच्यताप्रसग इति श-क्यम् । परपरया भूतलस्य घटत्वाश्रयतायामेव मानाभावात् । नह्याश्रया श्रयाश्रयतायां आश्रयताप्रयोजकम् । अपि तु सति तत्प्रमाणे । यथा हि कारणकारणत्वादेरविशेषेऽपि कुलालपित्रादेरकारणत्वं दण्टादेः घटादिक प्र-ति कारणत्व च अन्वयव्यतिरेकसद्भावासद्भायाभ्यां कल्प्यते तद्वत् परंप रया तदाश्रयत्वग्राहक च सामानाधिकरण्यनिर्देशादिकम् । नचैतत् भूत-लादौ घटत्वादेरस्ति । भूतल घट इत्याद्यप्रतीतेः । अत्र तु ब्राह्मणोऽहम् नीला गौः इव नद्वृत्तिताग्राहकत्वसत्वात् युक्तं प्रवृ त्तिनीमित्ताश्रयत्वम् । अत्र केव शक्तिरिति ॥ अत्रेदं चिन्त्यम् । सामा नाधिकरण्य इत्यादौ व्यभिचारात् । नच तत्तत्सादृश्यविधित्सयैव तत्प्रयोगात् । तथैवानुभवाच्च । न तस्माद्भिन्नाश्रये तत्प्रवृत्तिनिमित्ताव्यापकत्वात् तन्निवृत्त्या तन्निवृत्तिरिति वाच्यम् । ब्राह्मणोऽहम् नीलो गौः इत्यादावपि शरीरे तन्निनित्तकत्वम् अपि तु शरीरगुणनिमित्तकत्वमेवेति युक्तमाश्रयितुम् । नाकारणात् ब्राह्मणमुपसृजेत् ब्राह्मणे

सिद्धत्वात् ॥ यद्यपि ब्राह्मणत्वगपि तत्र विशेषणतया प्रतीयते तथा ऽपि विशिष्टमेव निमित्तम् न जातिमात्रम् । स्पष्टमेव पुरुष पदसामानाधिकरण्ये निमित्तं दृश्यते । तथाच अमरः—' त्रिषु द्रव्ये पाप

पुण्यसुखादि च ' इति ॥ [अत्र ग्रन्थपातः]

अत एव वितसामानाधिकरण्यप्रत्ययात् तदवच्छेद-कसंयन्धेन तदाश्रवता दुर्वारैव । कालस्सर्ववानिति प्रतीतेस्सत्वेऽपि का-लस्सर्वमित्यप्रतीते: न तस्य निमित्तताऽवच्छेदकसंबन्धेन तदाश्रयत्वमित्य-न्यत्र विस्तरः ॥

यत्तु ' निखिललोकविदितशब्दार्थसबन्धप्रकारमपनुद्य सर्वशब्दानाम लौकिकार्थ एव अनादित्वावधारणे प्रामाणिका न यहुमन्यन्ते ' इत्यादिग्र न्थेन कार्यान्वितशक्तिं निराकुर्वतां सर्वशब्दानां ब्रह्मणि शक्त्यवधारण वि रुद्धम् । सर्वलोकविदितशब्दार्थसंबन्धावधारणविरोधस्य उभयत्रापि तुल्य-त्वादिति प्रलपनम्— तदप्युन्मादविलसितम् । कार्यान्वितशक्तिवाद इव शरीरवाचिनां शरीरिपर्यन्तत्वे लोकविरोधाभावात् । प्रत्युत ब्राह्मणोऽहम् स्थूलोऽहमित्यादिलौकिकप्रयोगानुमोदितत्वाच्च ॥

किंच ' वचसां वाच्यमुत्तमम् ' ' सर्वे वेदा यत्रैकं भवन्ति ' ' वेदै श्च सर्वैरहमेव वेद्यः ' इत्यादिभिस्सामान्यतो विशेषतश्च श्रुतिस्मृतिभिः जग त इव कार्यान्वितशक्तेः केनाप्यप्रमितत्वाच्च । कल्पनायां हि लोकविरोधो बाधकः नतु श्रुतिप्रमिते । अन्यथा ब्रह्मनिह्नवप्रसंगेन चार्वाकमतचर्वणं दु र्वारम् ॥ अत एव च शरीरवाचिनां शरीरिपर्यन्तत्वस्य लोकप्रसिद्धत्वेऽ पि सर्वस्य भगवच्छरीरत्वं न लोकसिद्धमिति शङ्काऽपि परास्ता । ' यस्य पृथिवी शरीरम् ' इत्यादिभिर्विशेषतः ' एतत्सर्वं ह्स्तनु ' इत्यादिभिस्सा मान्यतः सर्वशरीरत्वस्य प्रमितत्वात् तत्र लोकविरोधस्याकिंचित्करत्वात् । नच तत् गौणमिति शक्यम् । ' यस्य चेतनस्य यत् द्रव्यं सर्वात्मना स्व र्थे नियन्तु धारयितु च शक्य तत्तस्य शरीरमिति शरीरपदप्रवृत्तिनिमि-त्तत्वेनमुख्यतानिश्चयात् । त्वमहशब्दलक्ष्यार्थसच्चिदानन्दलक्षण इत्यादीनां सच्चिदानन्दपदानामिव सत्ताज्ञानानन्दप्रकारयोः बोधकाः त्वमहमादिशब्दाः अपि तु तच्छरीरप्रकारकबोधका इत्येतावन्मात्रपराणां ' वचसां वाच्यमुत्त-

मम् ' इत्यादिप्रमाणप्रतिपन्नवाच्यतानिराकरणपर्यन्तसामर्थ्याभावात् । शरीर लक्षणप्रपञ्चप्रकारस्तु सारदर्पणे, तत्वमार्ताण्डे च द्रष्टव्य इत्युपरम्यते ॥

इति श्रीशैलश्रीनिवासीविरचिते विरोधनिरोधे
॥ सप्तदशो निरोधः ॥

## अथ अष्टादशो निरोधः

सूक्ष्माचिद्वपुषो यस्मात् जज्ञे विश्वं वियन्मुखम् ।
निष्कलं निष्क्रियं शान्तं तमनन्तमुपास्महे ॥

ननु नाकाशस्य कार्यत्वं युक्तं निरवयवद्रव्यत्वात् आत्मवत् । एवं वायुरपीति चेत्— मैवम् । हेतोरसिद्धेः । तथा हि आकाशस्य नित्यत्वमंगीकुर्वता न विभुत्वमगीकृतम् । तच्च मूर्तद्रव्यसंयोगित्वरूपमभ्युपगतम् । तत्र आकाशे घटस्य संयोगः किं कार्त्स्न्येन ? किं वैकदेशेन ? आद्ये आकाशस्य घटादिवदल्पत्वं वा स्यात् घटादेर्वा विभुत्वमिति । द्वितीये- सावयवत्वं दुर्वारम् । वेदान्तेषु तस्य पञ्चीकरणप्रक्रियया अंशभेदेन परिणामांगीकारेण सावयवत्वनिर्णयात् । आकाशं नित्यं निरवयवद्रव्यत्वादित्यनुमानं अत एव नरशिरःकपालशुचित्वानुमानवत् कालात्ययापदिष्टम् । हेतुश्च स्वरूपासिद्धः । एवं वायोरपि सावयवत्वं प्रामाणिकम् ॥

अत एव 'वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः । अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥ ' इति वचनबलात् वायोरिव आत्मनोऽपि स्वरूपैक्यं वदन्तः परास्ताः । वाय्वादीनामिव आत्मनामपि आकारसाम्यमात्रप्रतिपादनेन स्वरूपैक्याप्रतिपादनात् । सितनीलादिभेदेन यदे

दृश्यते नभः । उक्तयुक्तेः । आकाशमेकं हि यथा घटादिषु पृथग्भवे-त्' इत्यादिष्वपि पृथग्व्यपदेशानर्हतारूप एकत्व एकैकशब्देनोच्यते । घ-टावच्छेदकवैलक्षण्यान् पृथग्व्यपदेशार्हतारूपं पृथक्त्वम् । यथा देवदत्ता दिषु श्यामत्वलोहितत्वादयो धर्माः एकस्वरूपत्वाविरोधिनः पृथक्स्वरूप तामवगमयन्ति । खण्डो मुण्डः पूर्णशृङ्गो गौः इत्यादौ खण्डत्वमुण्डत्वाद यैः स्वरूपैक्याविरोधिनः तत्पृथक्त्वं कल्पयन्ति तद्वत् ॥

यत्तु देवदत्तादिशरीरस्यापि सावयवत्वात् स्वरूपैक्यं नास्त्येव तत्कथं तत्र स्वरूपैक्यादिव्याघातः ? उच्यते— नैवं देवदत्तशब्दोह्यवयवसमुदाये संकेतितो न प्रदेशे वर्तयितुं शक्यः । एवं घटादयोऽपि शब्दाः । ततश्च स्वसमानाधिकरणस्वाश्रयप्रतियोगिकभेदव्याप्यानां खण्डत्वादीनामेकस्यांगे व्य क्तावनन्वयात् युक्तमाश्रयभेदकत्वम् । श्यामत्वयुवत्वादीनामतथाविधानां न स्वाश्रयभेदकेतीति युक्तमाश्रयितुम् ॥

यद्यपि सिद्धान्ते अवयवातिरिक्तत्वमवयविनो न संमतम् तथाऽपि अवयवानामेव संयोगविशेषविशिष्टानां अवयत्वव्यवहारविषयत्वात् विशेष णविशिष्टे संकेतितस्य पदस्य केवलविशेषणे प्रयोगायोगात् तदवस्थोपादान-द्रव्यस्यैव उपादेयत्वात् । तत्तदवस्थाद्वारकमेकत्वं तत्राबाधितमिति तत्र स्व रूपैक्यव्यवहारो न विरुद्धः । दृश्यते हि समाहारगतमेकत्वमादाय पाणि-पादमित्यादौ समाहारद्वन्द्वे एकवचनप्रयोगः । परीक्षकाश्च 'राजसूयेन स्वा राज्यकाम ' इत्यादौ दम्पत्योः कर्तृत्व एकमिष्टिपशुसोमात्मकसमुदायगतं समुदायत्वमेकमादाय एकवचनप्रयोगः तथैव 'दर्शपूर्णमासाभ्या 'मित्यादौ पर्वद्वयगतसमुदायद्वयनिष्ठं द्वित्वमादाय द्विवचनप्रयोगं च वर्णयन्ति । एत-देवाभिप्रेत्य भगवद्भाष्यकारैः जन्माद्यधिकरणे जन्मादिविशेषणभेदाद्ब्रह्मणो बहुत्वप्रसंगमाशक्य श्यामत्वादिविशेषणभेदेऽपि देवदत्तादेरिव ब्रह्मणोऽप्ये कत्वमविरुद्धमिति वर्णनं कृतम् ॥ अत एव 'वेणुरन्ध्रविभेदेन ' इति श्लो कव्याख्या नावसरे 'वाय्वशानां स्वरूपैक्यपरत्वात् निरस्यताम् । तद्वदेव दे

वदत्तादिष्वपि वस्तुस्वरूपैक्यानिरासे तुल्ये तत्र विशेषणभेदायत्तं न स्वरूपैक्यानिरासे तुल्ये तत्र विशेषणभेदायत्तं न स्वरूपानेकत्व यथा तद्वत् ब्रह्मणोऽपि न स्वरूपभेदायत्त स्वरूपानेकत्वमिति दृष्टान्तवर्णनं विरुद्धमिति कस्यचित्प्रलापोऽपि निरस्त । अवस्थाविशेषविशिष्टवस्तुगतमेकत्व अवस्थाद्वारक श्यामत्वादिविशेषणभेदेऽपि यदा तत्र कैमुतिकन्यायसिद्धो ब्रह्मण्येकत्वानपगम. इत्येवमभिप्रायकत्वं जन्माद्याधिकरणस्थश्रीभाष्यस्य ॥

इद तु शक्यम् । देवदत्तादिशब्दानामिव वाय्वाकाशादिशब्दानामपि उक्तरीत्या विशिष्ट संकेतितत्वात् तदंशेषु वाय्वादिशब्दप्रयोगानैचित्यात् । तत्रापि स्वरूपैक्यपरता किं न स्यात् ? इति । तत्रेदं तत्वम् । समुदायवाचिनः केचिदेकदेशेऽपि प्रयुज्यन्ते । यथा पूर्वे पांचाला उत्तरे पांचाला इति । तान्त्रिकाश्च पटैकदेशस्थे पटावस्थ इति, वर्णयन्ति । नैवं देवदत्तादयश्शब्दास्तदेकदेशे प्रयुज्यन्ते । अतस्ते समुदाये संकीतितास्तत्रैव च शक्ताः । अतस्तत्र स्वरूपैकत्वमाविहतम् ॥

वस्तुतस्तु इदमत्राकूतम् । एकस्वरूपाणामपि वस्तूनां केषां चिदाकाराः समानाकाराः वाय्वाकाशाद्यंशाः केषांचिच्चासमानाकाराः देवदत्तशरीराणामवयवा हस्तादयः । तेषु सञ्ज्ञाभेदा आकारभेदप्रयुक्ता एव । तथा पृथिव्यंशेषु मृत्पाषाणादेषु मृदंशेषु च घटकरकामाणिकशरावादिषु तत्तत्संज्ञाभेद आकारभेद आकारभेदप्रयुक्त एव समानाधिकारेषु वाय्वाकाशादिषु दृश्यन्ते । तत्तदुपाधिगतविलक्षणकार्ययोगात् संज्ञाभेद. । तदेतदाह— 'वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञित ' इति । 'सितनीलादिभेदेन यथैक दृश्यते न ॥ यत्तु घटाकाशादिसंयोगादे. एकदेशकात्स्न्र्यविकल्पेन आकाशादेस्सावय निरवयवयोः जीवपरमात्मनोस्संयोगो नसिद्ध्येदिति दूषणं तत्र यद्वक्तव्य तत्सर्वं तत्वमुक्ताकलाप, सर्वार्थसिद्ध्योः संयोगिनिरूपणप्रकरणे उक्तम् ॥ तथा च तत्र ग्रन्थः— 'सर्वं द्रव्य सभागं न यदि कथमुपाध्यन्वयो भागतस्स्यात् कात्स्न्र्येनोपाधियोगे कथमणुवि

भुनोः सूक्ष्मतादीति जैनाः । सामग्रीशक्तिभेदप्रजानेतावेविधोपाधियोगस्वभावादौपाधिक्यंशक्लृप्तिः कथमिव न भवेद्विश्वसबन्धदृष्टेः ॥' इति मूलम् । अत्र 'जैनाः' इत्यत्र जीवब्रह्मणोस्संयोगे दूषणसाम्यमापादयतो जैनगान्धित्वं व्यक्तमुक्तम् । परिहाराभिप्रायस्तु सर्वार्थसिद्धौ व्यक्तमुक्तः । 'दृश्यते तावत् संयोगः । सच काचित्कतया उपलभ्यते । सच यदि प्रदेश एव न वस्तुनीत्यभिधीयते तथा सति तथा तस्यापि प्रदेशस्य प्रदेशान्तरपरिक्लृप्त्या कस्मिंश्चिदपि वस्तुनि सबन्धो न स्यादेव । दृश्यमानस्य च संबन्धस्य आधारतया परिदृष्टमेव वस्तु ग्राह्यम् । तत्तु निरवयव चेत् औपाधिकांशक्लृप्त्या निर्वाह्यम् । ननु तादृशस्य उपाधिसबन्धेऽप्यनधिकार इत्युक्तमिति चेत्— विश्वसंबन्धदृष्टिबलादुपाधिसबन्बन्धस्य स्वरूपनिर्वाहकत्वेन निर्वाहः कल्प्यः । एवं च सति अणुरपि धर्मिग्राहकप्रमाणबलात् अणुत्वेनैव सिद्धः । विभुरपि विभुत्वेनैव । उभयमपि निरवयवमौपाधिकांशक्लृप्तिश्चेति संगतमेतत्' इति ॥

एतदुक्त भवति । श्रुतिर्हि य मूर्धाभिषिक्तं सा च ब्रह्मणो जीवस्यच निरवयवत्त्व विभुत्वं ब्रह्मणः अणुत्वं जीवानामाह । 'नित्यं विभुं सर्वगतम्' 'एषोऽणुरात्मा चेतसा वेदितव्यः' 'निष्कलं निष्क्रियं शान्तम्' इत्यादिका । नचैतां युक्त्या बाधितु चार्वाकादन्यस्य बुद्धिर्जायते । आकाशे तु नैवम् निरवयवत्वनित्यत्वग्राहिणी श्रुतिरास्ति । किंतु पञ्चीकरणत्रिवृत्करणाद्युक्त्या तत्सावयवतैव प्रत्याय्यते । अतो न तद्दृष्टान्तेन ब्रह्मणस्सावयत्व वा ब्रह्मदृष्टान्तेन आकाशस्य निरवयत्वं वा कल्प्यमतिप्रसगात् । 'ममैवांशो जीवलोके जीवभूतस्सनातनः' इत्यादिक तु विशिष्टैकदेशाभिप्रायकम् । रामकृष्णादेरंशत्वव्यवहारस्तु सामर्थ्यैकदेशाभिप्राययकः । औपाधिकांशाभिप्रायकत्वे दोषः ॥

यद्यपि आकाशस्य निरवयत्वेन एकत्वेन च प्रसिद्धस्य सावयवत्वानेकत्वप्रसाधने त्वदीयब्रह्मणः सशरीरत्वस्य शंखचक्रादिधारणे सावयवत्व

मनेकत्वं च ब्रह्मणो दुष्परिहरमिति आकाशं सावयवं निरवयव चेति वि चारः सावयवमेकमनेकं वेत्यादिविचारोऽपि न प्रशसनीयः। किस्वाच्छा- दवीय. स्वमतव्याघातहेतुत्वादिति दूषण, तदपि भ्रान्तजाल्पितमनुपादेयम्। तथा हि= किमाकाशस्य निरवयवत्वप्रसिद्धिः लौकिकी वैदिकी वा ? नाद्यः असिद्धेः। प्रत्युत घटाकाशः करकाकाश इत्यादिभेदव्यवहारेण सावयत्वस्यैव प्रसिद्धेः। नं द्वितीयः। त्रिवृत्करणादिना पञ्चीकरणादिना च तत्सावयवत्वस्यैव सिद्धेः। एकत्वप्रासिद्धिस्तु नावयगतमेकत्वं विरुणद्धि भिन्नाश्रयत्वात्। समानाश्रयत्वे हि तयोर्विरोध. ? अन्यथा घटादिष्वप्ये- कत्वप्रासीद्धिविरोधात् सावयवत्वासिद्धिप्रसगः॥

ननु घटत्वावस्थागतमेकत्वं तदवस्थेष्वयवेषु विद्यमानमपि अतदव स्थेष्वयवेषु अतदवस्थेषु कपालादिष्वनेकत्व न विहन्तीति युक्तम्। इह त्वाकाशावस्थायामेव एकत्वमनेकत्वं च विरुद्धमिति चेत्— सत्यम्। अव- स्थैव द्विधा। एकावयवमात्रपर्याप्ता। अन्या तु तदेकदेशेऽपि पर्याप्ता। यथा सूच्यादिबद्धे पटद्वये एकः पट इति खण्डेषु च द्वाविति। अत एव पटैकदेशे दग्धे पटो दग्ध इति व्यवहरान्ति। अनिबिडद्रव्येषु च तेजोजला दिषु, जलत्वेन तेजस्त्वेन एकत्वानेकत्वव्यवहारः प्रत्यक्षेणैवावगम्यते। त- स्मात्समुदायैकदेशाभिप्रायकैकत्वानेकत्वव्यपदेशो न विरुद्ध इति अलमनेन उन्मत्तप्रलापकरणेन॥

इति श्रीशैलश्रीनिवासविरचिते विरोधनिरोधे

॥ अष्टादशो निरोधः॥



# अथ एकोनविंशो निरोधः

निमित्तं चाप्युपादानं विश्वस्य चिदचित्तनु. ।
शिवब्रह्मादिभिर्बन्द्यो श्रेयसे भूयसेऽस्तु न. ॥

उक्त हरिरेव सर्वस्य जगतो निमित्तमुपादानं चेति श्रुतिभिर्घोषितं प्रकृत्यधिकरणे निमित्तमात्रमीश्वरः प्रधानमुपादानमिति पाशुपतं तु मतं 'पत्युरसामञ्जस्यात्' इत्यत्र निरस्तम् विशेषशब्दमूर्धन्यनारायणपदघाटतासु श्रुतिषु विष्णोरन्यस्यस्य कारणत्वप्रतिपादनासामजस्यात् । आनुमानिकेश्व रानिमित्तत्वस्य निमित्तोपादानाभेदप्रतिपादकश्रुतिविरोधेन असामञ्जस्या. । 'नारायणाद्रुद्रो जायते' इत्यादिषु जन्यत्वेनेन्द्रादिसाधारणस्य तज्जनकत्वानुपपत्तेः असामंजस्यादित्यादिक 'असामजस्यात्' इति सामान्यनिर्दे शादवगम्यते । श्रुतिस्मृत्योर्विरोधे स्मृत्यप्रामाण्यस्य पूर्वतन्त्रसिद्धत्वात् । असामंजस्यादिति प्रसिद्धवन्निर्देश. आनुमानिकानिमित्तेश्वरवादे च असामजस्य शास्त्रयोन्याधिकरणे सम्यङ्गनरूपितम् । तत्र हीद निष्कृष्टम्— अनुमानं हि उपादानत्वानधिकरणवृत्तिकर्तृत्वगोचरं घटादिकर्तृदृष्टान्तेन सशरीरनिष्ठकर्तृत्वपर्यवासित च । कुलालादेर्हि शरीरस्यैव मृदाद्यधिष्ठातृत्व घटादिकर्तृत्व च दृष्टम् । दृष्टानुसारिणी च कल्पना । अतो न प्रधानस्य उपादानत्वम् । पशुपतेर्निमित्तत्व अशरीरस्यैव कारणत्वामत्यादि सर्वं दृष्टविरोधात् श्रुतिविरोधाच्च अनुपपन्नमिति ॥

श्रुतिप्रामाणिकमुपादानाभिन्नकर्तृत्वं चिदचिच्छरीरकत्वं कारणत्वोपयुक्तं अप्राकृतानेकशरीरवत्त्वं चेत्यादिकं सर्वं प्रमाणान्तरानवगत' । नहि तत्र कश्चिद्विरोधः समस्ति ? न तावत् न्यायविरोधः । कोऽसौ विरोध न्यायः । वैषम्यनैर्घृण्यप्रसगः । अबाप्तसमस्तकामत्वं वा ? नाद्यः कर्मसापेक्षत्वेन तदप्रसंगस्य 'वैषम्यनैर्घृण्ये न सापेक्षत्वादिति सूत्रकारैरेवोक्त त्वात् । न द्वितीयः । आप्तकामत्वेऽपि लीलार्थं सृष्टिसंभवस्य 'लोकवत्तु लीलाकैवल्यम्' इति सूत्रकारैरेवोक्तेः । 'स एकाकी न रमेत' इत्यादिश्रुतेश्च ॥

यत्तु 'पत्युरसामञ्जस्यात्' इति प्रथमसूत्रे वैषम्यनैर्घृण्यप्रसगादवाप्तकामत्वव्याघातादित्याद्यसामजस्यादिति न्यायः वर्णितः। 'संबन्धानुपपत्तेश्च' इति द्वितीयसूत्रे संबन्धानुपपत्तिरुक्ता । 'अधिष्ठानानुपपत्तेश्च' इति तृतीयसूत्रे शरीरानुपपत्तेरीश्वरस्य कर्तृत्वं न संभवतीत्युक्तम् । 'करणवच्चेन्न भोगादिभ्यः' इति चतुर्थसूत्रे करणायत्तशरीरवत्त्वे जीववदीश्वरस्यापि भोक्तृत्वप्रसंग इत्युक्तम् । एतैर्न्यायैः त्वदभिप्रेतेश्वरस्यापि कर्तृत्व दूषित भवतीति कस्यचित्प्रलपन तदुन्मत्तप्रलपनमिति प्रसिद्धमेव । 'सवन्धा. नुपपत्तेश्च' इति द्वितीयसूत्रकल्पनेन सूत्रान्तरेष्वपि भाष्याद्यनुक्तसूत्रार्थानु. नुवादेन च उन्मन्दस्य स्फुटत्वात् । इत्थमत्र भाष्यम्— 'नैकास्मिन्नसभ. वात्' इत्यतो नेत्यनुवर्तते। पत्युः पशुपतेर्मत नादरणीयम् । कुतः असा. मंजस्यात् । सामर्थ्य च अन्योन्यव्याघातांश्चैव विरोधाश्चेति प्रथमसूत्रे द्द. श्यते। द्वितीयसूत्रं नास्त्येव । 'अधिष्ठानानुपपत्तेः' इत्यत्रापि 'वेदबाह्या नामनुमानाद्धि केवलान्निमित्तेश्वरकल्पनात् । तथा च सति दृष्टानुसारेण कुलालादिवदधिष्ठानम्' इत्यादिना दृष्टविरोध अनुमानस्य कालात्ययाप. दिष्टत्वात् नाशरीरस्येश्वरस्य प्रधानाद्यधिष्ठानम् । सशरीरत्वे चापि दृष्ट विरोधादेव न निरवयवशरीरवत्त्वमानुमानिक प्रभवतीति उक्तम्। 'करण वच्चेत्' इत्यत्रापि अशरीरस्यैव जीवस्य करणाद्यधिष्ठातृत्व तद्वदीश्वरस्यापि देहाद्यधिष्ठानं स्यादित्याशंक्य तत्र पुण्यपापयोस्तन्निमित्तयोस्सद्भावात् इह च तदभावादयुक्तं प्रधानाद्यधिष्ठातृत्वम्। तत्सबन्धस्वीकारे च अन्तवत्त्वमसर्वज्ञत्वं चानन्तरसूत्रैर्दर्शितम् ॥

श्रुत्युक्तनिमित्तोपादानाभेदे च न कश्चिद्विरोधः । चिदचिच्छरीरकस्यैवोपादानत्वाङ्गीकारात् । नचात्रादृष्टविरोधः । सूक्ष्मताऽपन्नस्य वस्तुनः स्थूलावस्थमात्मान प्रत्युपादानतायाः प्रत्यक्षेणावगमात् । नापि सद्वारकावस्थाश्रयत्वे विरोधः । शरीरद्वारकबाल्यौवनाद्यवस्थाश्रयतायाः आत्म निलोक एव दर्शनात् । कर्तृत्वादिकारकान्तरेष्विव उपादनतायां सद्वारकताया अविरोधाच्च । विस्तृतं चैतत् सिद्धान्तचिन्तामणौ ॥

एतेन न्यायविरुद्धस्य श्रुतिबलात् सिद्धौ कृत्स्नप्रसक्तिर्निरवयवत्वशब्द कोपो वा इति न्यायविरुद्धपरिणामः श्रुतिबलादंगीकर्तुं शक्योऽपि अचिद्वस्तुनः परिणामः सद्वारकं ब्रह्मणः परिणामित्वमित्यादिकं चायुक्तं स्यादिति कस्यचिदुन्मत्तस्य प्रलापो दूरोत्सारितः । 'निरवयत्वशब्दकोपो वा' इति सूत्रे श्रुतिविरोधस्यैवोक्ततया तत्र न्यायविरोधोक्तेरुन्मत्तप्रलापत्वात् । निरवयवत्वनिर्विकारत्वादिश्रुतिविरोधात् । साक्षात्परिणामस्य स्वरूप शरीरद्वारकपरिणामस्य तात्पर्यतस्सूचनात् । 'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः' इति तथैवोपबृंहणात् । तत्र दृष्टविरोधश्रुतिविरोधयोरभावात् । निमित्तत्वोपादानत्वयोः श्रुतिप्रमितयोः अन्यतरस्य प्रामाणिकत्वे अन्यतरस्याप्रामाणिकत्वसंभवाच्च उपादानत्वस्यावश्यकत्वे शरीरद्वारा त दाश्रयत्वस्य बालो युवा जात इत्यादिवत् औचित्यादपि कर्तृत्वं च न परिणा मरूपमित्युपपादितम् ॥ अत एव ब्रह्मणः स्वतः परिणामं त्यजता कर्तृत्वमपि तस्य त्याज्यं स्यादिति भ्रान्तप्रलापो निरस्तः । तस्मान्निमित्तमात्रेश्वरवादो वेदविरोधादयुक्तः ॥

शिवस्य निमित्ततावादोऽपि वेदविरुद्धः । विशेषशब्दमूर्धन्यनारायणशब्दघटितवाक्यानुसारेण साधारणशब्दघटितवाक्यानां सर्वेषामपि तत्रैव पर्यवसानस्य छागपशुन्यायसिद्धत्वात् ॥

ननु 'पशुना यजेत' इति उपादानगतत्वेन एकत्वस्य विवक्षितत्वात् सर्वपश्वालंभस्याशक्यत्वात् कस्य चिदेकस्यैव पशोरालभ्यत्वे सति कोऽसौ पशुरित्यपेक्षायां मन्त्रवर्णात् छागो निर्णीयत इत्युक्तम् । इह तु अननुष्ठेये ब्रह्मणस्स्वरूपे कुत एकत्रैव पर्यवसानापेक्षा इति चेत्— न; अननुष्ठेयत्वे 'एकमेवाद्वितीयम्' इति कारणगतैकत्वश्रुत्या तस्योक्तन्यायेन विवक्षितत्वेच सति असाधारणनारायणशब्दानुसारात् अन्येषां तत्र विश्रान्तेर्युक्ता । यथाऽऽहुः—'निस्साधारण्यनारायणपदविषये निश्चयं यान्त्यबाधे सद्ब्रह्माद्यास्त-स्समानप्रकरणपठिताः शंकितान्यार्थशब्दाः' इति ॥

ननु 'आपो नारा इति प्रोक्ताः आपा वै नरसूनवः । ता यदस्या-यतनं पूर्वं तेन नारायणस्स्मतः ॥ ' इति उदकशायिनारायणत्वस्यैव तत्पद प्रवृत्तिनिमित्तत्वात् । तस्य चं साधारण्यात् कुतो नारायणशब्दस्यासाधारण्यमिति चेत् — सत्यम् । न यौगिकोऽय शब्दः मत्स्यकूर्मादिष्वप्रयोगात् । किंतु योगरूढः । अस्ति च रूढग्राहकमन्त्रणत्वम् । तद्धि 'पूर्वपदात्संज्ञायामग' इति विहितम् । सञ्ज्ञात्वं च व्यक्तिविशेषे न रूढिमन्तरेण संभवति । सा च भगवति हरावेवेति प्रयोगप्रसिद्धिप्राचुर्याभ्यामवगम्यते । अतो न देवताऽन्तरे तस्य वृत्तिर्युक्ता ॥

अथ स्यात् । माऽस्तु 'शकायाम्' इति णत्वम् । 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इत्येव णत्वमस्तु । नच तत्र 'रषाभ्यां नोणस्समानपदे' इति अधिकारादेकस्मिन्नेव पदे णत्वं विधीयते । तच्च 'निमित्तनिमित्तिनोः' इति सामर्थ्याद्गम्यते । इह तु नैवम् नारपदायनपदयोर्भिन्नत्वादिति वाच्यम् । समासस्याप्येकपदत्वादैकपद्यमेकस्वर्यमेकविभक्तित्वं च समासप्रयोजनामिति किल न्यायवृद्धाः । नचैव सञ्ज्ञायां णत्वविधिवैयर्थ्यम् । 'रामनाम' 'गन्धर्वगानम्' इत्यादावतिप्रसंगवारणाय संज्ञायामेवेति नियमार्थं तदुपपत्तेः । अस्ति च नियमार्थत्वे ज्ञापकम् 'उपसर्गादसमासेऽपि णोपदेशस्य' इत्यत्र समासेऽपि ग्रहणम् । तद्धि समासे च असमासे च प्रणमति परिणमति प्रणामकः परिणामकः इत्यादौ णत्वार्थं क्रियते तच्च ऽर्थम् । 'उपसर्गान्नोपदेशस्य सारूप्योक्तौ 'अपूर्वपदात्' इत्यस्यानुवृत्तौ क्रियते ज्ञायते । 'पूर्वपदात्' इत्यस्य नवमार्थत्वात् न समासे णत्वं प्राप्नोतीति तदपि यथा स्यादित्येतदर्थमपि ग्रहणमित्युच्यते एवं तर्हि तस्मादेव नियमात् नारायणशब्देऽपि नासंज्ञाया णत्वम् ॥

किंच न समासप्रयुक्तमैकपद्यमाश्रित्य रामनामेत्यादौ णत्वप्राप्तिः पद इत्येकत्वविवक्षया तद्वतो ग्रहणेन चैकपदत्वलाभेऽपि पुनस्समानग्रहणे न कदाचिदपि भिन्नपदत्वानधिकरणं तथाविधस्य पदस्यैव समानपदेन

ग्रहणमिति निर्णयात् । तथा च भाष्यम्— 'समानपद इत्युच्यते, नचैतत् समानं पदम् । समासे कृते सामान पदं यन्नित्यं नचैतान्नित्यं पदमेव । किं वक्तव्यमेतत् ? नहि कथमनुच्यमानम् संमते समासग्रहणसामर्थ्यात् यदि हि यत्समानं चासमानं च तन्त्रं स्यात् समानग्रहणमनर्थकं स्यात्' इति । कैयटश्चाह— 'पद इत्येव अपदस्थयोर्निमित्तानिमित्तिनोरसमवात् सामर्थ्यादेकत्वसंख्याया विवक्षया समानलब्धे समानश्रुतिरगीकृतावधारणा-विज्ञायत' इति ॥

अत एव 'पूर्वपदात्संज्ञायाम्' इत्यस्य न नियमार्थता । समासादव यवयोः पदयोः प्रत्येकं प्रत्येकं प्रयुज्यमानयोः भिन्नपदत्वात्समानपदशब्देन निमित्तवत्पदमदाधिकरणताऽवच्छेदकपदत्वानवच्छिन्नत्वाभिधायकेन रामशब्दासमभिव्याहारेणापि प्रयुज्यमाने नामपदे विद्यमाननकारस्य निमि त्तवत्पदभेदाधिकरणताऽवच्छेदकपदत्वावच्छिन्नाधिकरणताकस्य व्यावर्तित-त्वात् । 'तत्र किंवे' त्यादिना णत्वाप्राप्तया तद्व्यावृत्तये पूर्वपदादि-त्य नियमार्थताऽनुपप्रेत्तः । एतत्सर्वमभिप्रेत्योक्तं कैयटेन— 'समासे चापूर्वोत्तरविभागापेक्षया भिन्नपदत्वमस्तीति णत्वाप्रसंग. । अथ खरापा यण इत्यत्र कथ णत्वं यावता खरशब्दस्यापि तत्पदत्वमास्ति । तत्सत्वात् रूप-स्य समानपदत्वं नास्तीति । अत्राहुः— 'यत्र द्वावपि निमित्तानिमित्तकौ समानपदत्यादव्यभिचरतः तत्र णाभावः । इह तु रेफस्याव्यभिचारेऽपि नकारस्य समानषदत्वाव्यभिचारात् णत्व प्रवर्तत' इति ॥

एतदुक्तं भवति । 'समानषद' इत्यत्र समानशब्दः समानग्रामाव यवमित्यत्रेव एकशब्दपर्यावा' । तेन एकपदस्थत्वं तदर्थः । ततश्च समास प्येकपदत्वात् रामनोमत्यादावतिप्रसक्त तदिति भिन्नपदावृत्तित्व तदर्थो वा-च्यः । तच्च निमित्तविशेषणं निमित्तिनो वा ? आद्ये खारपायणो न सि द्धयेत् । निमित्ते मत्प्रत्ययभिन्नखरशब्दवृत्तित्वात् रेफस्यः । एवं दाक्षाय-णशब्देऽपि विकारस्य तथात्वात् । अव्याप्तिः अप्रासीद्धिश्च सर्वस्याप्रे किं

चिद्भिन्नपदप्रवृत्तित्वात् । अथ निमित्तवाद्भिन्नपदाप्रवृत्तित्वं तादितीत्याश्रित्य निमित्तिनो विशेषणमिति द्वितीयपक्ष आश्रीयते खारपायणादौ । अनिमित्तवत् भिन्नप्रत्ययवृत्तित्वात् न दोष इत्युच्येतं नैतदपि युक्तम् । पदशब्दस्य पद्यते गम्यते अनेनेति व्युत्पत्त्या नपावेनोक्तदोषान्तिवृत्तेः। सुप्तिङन्तपरत्वे च सुबुत्पत्तेः प्राक् 'गतिकारकोपपदानाम्' इति समासे गन्धर्वगानम्' इत्यादावतिप्रसंगात् ।
न णत्व वा उच्यते । अन्यथा निमित्तवत्पदभिन्नपदवृत्तित्वात् अप्राप्ते णत्वे व्यर्थस्स्यात् इति ॥

अत्रायमभिसन्धिः कैय्यटस्य । 'समानपदे' इति निमित्तिन एव विशेषणम् । तदर्थश्च निमित्तवत्प्रयोगाविषयवृत्तिभिन्नत्वम् । तच्चास्ति खारपायणादौ । खरादिशब्दानां पृथक्प्रयोगेऽपि प्रत्ययमात्रस्याप्रयोगात् । न केवला प्रकृतिः प्रयुज्यते नापि च केवलः प्रत्ययः प्रयुज्यते। रामनामादौ नातिप्रसंगः । नामादिपदानां रामादिपदाविषयकप्रतीतिविषयकतया तद्वृत्तित्वात् नकारस्स्यात् । तथैव सुबुत्पत्तेः प्राक् समासेऽपि न गन्धर्वगानामित्यादावतिप्रसंग । गन्धर्वादिपदाविषयकप्रतीतिविषयनानादिपदवृत्तित्वान्नकारस्य णत्वाप्रसक्तेः । कथंतर्हि नूनमतरशब्दे णत्वप्राप्तिरिति चेत्— अखण्डं सखण्ड वा कस्यचिदिदं नामेत्याश्रित्य 'पूर्वपदात्' इति णत्वप्राप्तौ तद्वारणार्थः क्षुभ्नादिपाठः' इति कैय्यटविवरणादिष्वेवोक्तत्वात् । अतो न कश्चिद्विरोधः ॥

अत एव मात्रभोगिणः,वीरभोगिणीत्यादौ भोगोत्तरपदसमासे प्रत्यये यणादेशे च निमित्तेन प्रत्ययस्थत्वेन तस्य च केवलस्य प्रयोगाविषयत्वेन निमित्तवत्पदाविषयकप्रयोगविषयस्थत्वाभावस्य णत्वप्रयोजनस्य सत्वात् भवत्येत्र णत्वम् । केवलं मागेपदमेत्र प्रयुज्यते नत भोगिनिपदम् । केवलात् भोगपदात् त्रप्रत्ययविधानात् । नन्वेव गर्गाणां भगो गर्गभगः सोऽस्यास्तीत्यस्मिन्नर्थे इनिप्रत्यये नर्गभगिणीत्यत्र णत्वमिष्टं न सिद्ध्येत्। केवल

स्यापि भगिनीशब्दस्य प्रयुज्यमानतया निमित्तवत्पदाविषयकप्रयोगाविषयक-प्रयोगाविषयवृत्तित्वान्नकारस्येति चेत् सत्यम्। तथाऽप्यन्योन्याभावस्याऽव्याप्य-वृत्तितया। निमित्तवत्पदाविषयकप्रयोगाविषयवृत्तित्वाभावस्य उक्तविग्रहविषय-णकारे सत्वेन णत्वाविघातात्। अन्योन्याभावोऽपि व्याप्यवृत्तिरिति पक्षेतु तद्भेदविवक्षायामपि न दोषः। एतदेवाभिप्रेत्य प्रातिपदिकान्तसूत्रे भा-ष्यम्—'प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणं कर्तव्यम्। किं प्रयो जनम्? असमासान्तप्रतिषेधार्थम्। समासान्तस्य माभूत्। गर्गभगिनी दक्षभागिनीति नवा भवति। गर्गभगिणीति भवति। यदेतद्वाक्यं गर्गाणां भ गो गर्गभगः गर्गभगोऽस्यास्तीति। यदात्वेतद्वाक्यं गर्गाणां

इति॥ कैय्यटश्च—'गर्गभागिनीति भागिन्नित्येतस्यान्तो नकार इति गर्गभगोऽस्यास्तीति खारपायणवत् समानपदस्थत्वात् रेफनकार नेनेति च णत्वं च। प्रयोगाविषयेत्यत्रापि प्रयोगाविषयत्वाभावः तद्भिन्नत्वं वा प्रवेश्यम्॥

वस्तुतस्तु समान इति यत् तेनैकाश्रयवृत्तित्वनिमित्तानीमित्तिनोर्लाभे ऽपि रामेणेत्यादिप्रातिपदिकप्रत्यययोः तयोरेकाश्रयवृत्तित्वाभावात् णत्वाप्रा-प्तौ तत्सिद्धये तन्निष्पत्तये पदग्रहणं कृतम्। तेन निमित्तनिमित्तिनोरेकपद-वृत्तित्वमेव विवक्षितम् तन्नास्ति रामेणेत्यादाविति तत्र णत्वं सिद्धम्। ए-वमपि रामनामेत्यादौ एतदतिप्रसक्तमिति तद्व्यावृत्तये निमित्तवत्पदभिन्नप दावृत्तित्वं तदर्थ इति वाच्यम्। 'समानग्रामावुभौ देवदत्ताय दत्तौ' इ-त्यादौ देवदत्ताधिकरणग्रामाभिन्नग्रामवृत्तित्व यज्ञदत्ते प्रतीयते। तत्रच भे-दप्रतियोगित्वयोः एकपदवृत्तित्वादभिन्नत्वमिव 'समानपद' इत्यत्रापि नि-मित्तवद्भेदप्रतियोगित्वानुयोगित्वयोः एकपदत्वादवाच्छिन्नत्वप्रतीत्या निमित्त-वत्पदत्वावच्छिन्नभेदवत्पदावृत्तेः नकारस्य णत्व निर्णीयते। ततश्च सम-स्तपदव्यावृत्त्यर्थे अस्मिन्विवक्षणे निमित्तवत्त्वमभिन्नपदमुत्तरायणषद विवं-क्षितम्॥ यद्यपि सर्वमापि क्वचिदुत्तरपदमेव। तथाऽपि तद्व्यावृत्तये प्रकृ तोत्तरपदावृत्तित्वम्। प्रकृतत्वं च णत्वप्रवृत्तिस्थलीयसमासघटकत्वम्। तथा

च भगिनीशब्दस्य समासान्तरघटकत्वेऽपि प्रकृतत्वं नास्ति तथाच भगिनीशब्दस्य समासान्तरघटकत्वेऽपि प्रकृतत्वं नास्ति। णत्वप्रवृत्तिस्थलीय समासाघटकत्वान्न दोषः ॥ एत्र च निमित्तवत्पदाविषयकप्रयोगाविषयकप्रयोगाविषयप्रकृतोत्तरपदावृत्तेर्नकारस्य णत्वप्रवृत्तिरिति निष्कर्षान्न कोऽपि दोषः ॥

एतेन यत् केन चित् प्रलपितम् 'अट्कुप्वाङ्' इत्यादिनैव नारायणपदेऽपि णत्वं भवत्येव । नच समानपदस्थत्वाभावः । अयनशब्दस्यान्तर्वर्तिनीं विभक्तिमाश्रित्यैव पदत्वस्य वक्तव्यतया प्रत्ययलक्षणत्वस्य च उत्तरपदत्वे च 'अपदादिविधौ प्रतिषेधः' इति अपदादिविधौ प्रतिषिद्धतया प्रकृते अयनशब्दे- णत्वस्य अपदादिविधित्वेन प्रत्ययलक्षणाभावेन पदान्तरस्थत्वाभावात् खारपायणादाविव णत्वाविघातात् रामनामादौ तु पदाविधित्वात् प्रत्ययलक्षणसत्वेन पदान्तरस्थत्वात् णत्वं न सभवतीति — तत् प्रकृतानुपयुक्तत्वादुपेक्षणीयम् । गन्धर्वगानमित्यादावतिप्रसगवारणाय समानपद इत्यन्योक्तार्थं तया ततः नारायणपदेऽपि 'अट्कुप्वाङ्' इति णत्वाप्रवृत्तेः । गानशब्दे हि नकारो न षदादिः । अथैतद्दोषवारणाय 'पूर्वपदात्सञ्ज्ञायाम्' इत्यस्य नियमार्थतया णत्वं वार्यत इति त्वदिष्टमपि न सिद्ध्येत् इति यत्किंचिदेतत् ॥

इति श्रीशैलश्रीनिवासविरचिते विरोधनिरोधे

॥ एकोनविंशो निरोधः ॥



# अथ विंशो निरोधः

परमव्योम्नि नित्ये यः क्रीडते रमया सह ।
पुंसे परस्मै पूर्णाय तस्मै विश्वात्मने नमः ॥

ननु इदमनुपपन्नम् । चिदचिदीश्वरतत्वत्रयातिरिक्तस्य नित्यस्य परमव्योमातिरिक्तस्य नित्यस्य परमव्योमशब्दितस्य वस्तुनः एवाप्रसिद्धत्वात् अप्रामाणिकत्वाच्चेति चेत्— धिक्त्वां बधिरम् । 'ऋचो अक्षरे परमे व्योमन्' 'यो वेद निहितं गुहायां परमे व्योमन्' 'आदित्यवर्णं तमसः परस्तात्' 'क्षयन्तमस्य रजसः पराके' 'अष्टाचक्रा नवद्वारा देवानां पूरयोध्या' 'वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पति. । आस्ते विष्णुरचित्यात्मा इत्यादिश्रुतिस्मृतिप्रमाणसिद्धत्वात् ॥

यत्तु चिदचिदीश्वरातिरिक्तं वस्तु नास्तीत्युक्तम् । तथैव परमव्योमशब्दितस्य लोकस्यापि तत्तन्मण्टपगोपुरप्राकारोपवनादिरूपेण परिणममानस्य अप्राकृतस्य अचिद्रूपतास्वीकारात् । नचैतावता नित्यत्वानुपपत्तिः । 'इदं सर्वमसृजत' इत्यादौ इदमिति निर्देशानर्हस्य प्राकृतस्यैव वस्तुन. सृज्यत्ववचनेन अप्राकृतस्य नित्यत्वाविरोधात् । प्राकृतस्यापि वस्तुनः स्वरूपेण नित्यत्वमवस्थाविशिष्टवेषेणानित्यत्वं अंगीकुर्वतां प्राकृतेतरस्यापि तस्य विविधविचित्रपरिणामास्पदस्यापि नित्यत्वाविघाताच्चेति ॥

यत्तु कस्य चिदुन्मत्तस्य प्रलापः— 'परं जैमिनिर्मुख्यत्वात्' इत्यत्र परस्य ब्रह्मणः परिपूर्णस्य सर्वगतस्य सत्यसंकल्पस्य स्वेच्छापरिकल्पिताः स्वासाधारणाः अप्राकृताश्च लोकाः नात्यन्ताय न सन्ति । श्रुतिस्मृतीतिहासपुराणानां प्रामाण्यमुक्तम् ॥ इत्थं चोक्त्वा तत्रैवाधिकरणे 'नच कार्ये प्रत्यभिसन्धिः' इत्यत्र 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्र

मुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि ॥ ' इति अ. भिसंभाव्यब्रह्मलोकस्य अकृतत्वश्रवणादिति वैकुण्ठस्य नित्यत्वे श्रुतिः प्र माणमिति चोक्तम् । ततश्च विरोध. ॥ किंचेद वैकुण्ठस्य नित्यताप्र- तिज्ञानं ' अतोऽन्यदार्तम् ' इति श्रीवैकुण्ठस्य नित्यताप्रतिपादकसकलश्रुति- स्मृतिविरुद्धम् । ब्रह्मातिरिक्तानां वियन्मातरिश्वादीनां नित्यत्वे एकविज्ञा नेन सर्वविज्ञानप्रतिज्ञा हीयेत । तस्माद्वियन्मातरिश्वनो मुख्यैवोपत्तिरंगी कर्तव्येत्युपपादयाद्भिः बहुभिरधिकरणैश्च विरुद्धम् । स्ववचनाविरुद्ध च । ' यावद्विकारं तु विभागो लोकवत् ' इत्यत्र हि ' ऐतदात्म्यमिदं सर्वम् ' इत्या दिभिः आकाशस्य विकारत्ववचनेन तस्यापि ब्रह्मणो विभाग उत्पत्तिरस्त्येव लोकवत् । ' यथा सर्वे इत्यनेन सर्वेषामप्युत्प- त्तिरुक्ता स्यात् । तद्वदिहाप्याकाशस्येव वैकुण्ठस्याप्युत्पत्तिः ' ऐतदात्म्य मिदं सर्वम् ' इत्यादिपरश्शतश्रुतिबलादभ्युपेयम् माशंक्य धर्मज्ञानस्योत्पत्तिं स्वीकृत्य कथचित् प्रतिज्ञा निर्व्यूढा । नह्ये व वैकुण्ठस्य कश्चिद्धर्मोऽस्ति ? यदुत्पत्त्या वैकुण्ठस्याप्युत्पत्तिमुपचर्य प्र. तिज्ञा निर्वोढुं शक्येत । तस्मात् श्रुतिस्मृतिमात्रत्वदीयभाष्यविरुद्धोयं वैकु- ण्ठस्य नित्यत्वाभाव इति— तत् उन्मत्तप्रलपितम् । इच्छाकल्पितत्वेऽ पि नित्येच्छापरिकल्पितानां नित्यत्वस्य अनित्येच्छापरिकल्पितानां अनित्य त्वस्य सिद्धान्तसिद्धत्वात् ॥

अत एव तत्रैवाधिकरणे इच्छापरिकल्पिता इत्यंशमुपादाय ' नित्येच्छा परिकल्पिता ' इति श्रुतप्रकाशिकायां व्याख्यातम् ॥ यद्यपि सर्वेऽपि पदा- र्था भगवदिच्छाऽधीनस्वरूपस्थितिप्रवृत्तिकत्वात् इच्छाकल्पिता एव तथाऽ पि नित्या एते भवन्त्वितीच्छया कल्पिताः अन्येत्वनित्या इतीच्छावैचित्र्या द्वस्तुवैचित्र्यम् । इदं च सर्वसैद्धान्तिकसम्मतम् । अन्यथा कार्येष्वपि वै चित्र्यप्रसंगस्याकारणिकत्वप्रसंगात् ॥ ' आत्मनिचैवं विचित्राश्च हि ' इति वदतः सूत्रकारस्यापीदं संमतम् । युक्तं चैतत्— ' नास्त्यकृतः कृतेन ' ' धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि ' ' ऋचो अक्षरे परमे

व्योमन्' 'तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः' 'अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति हरेः' 'देवानां पूरयोध्या' इत्यादिश्रुतिशतेन नित्यत्वेन 'सर्वं त परादाद्योऽन्यत्रात्मनस्सर्वं वेद' 'सर्वस्य वशी सर्वस्येशानः 'न तदस्ति विना यत्स्यान्मया भूत चराचरम्' इत्यादिभिः नित्यानामनित्यानां च परमात्मायत्तस्त्रस्य प्रमितत्वेन उभयविधश्रुतिस्मृतिप्रामाण्यप्रतिपत्तये तदिच्छावैचित्र्येण पदार्थानां नित्यानामपि नित्यत्वेन भगवदिच्छाऽऽयत्तत्वेनैव स्वरूपास्थितिप्रवृत्त्यादेरवश्यांगीकर्तव्यत्वात् ॥

यत्तु वैकुण्ठस्य नित्यत्वे 'अतोऽन्यदार्तमिति श्रुत्युक्तब्रह्मान्यसर्वकार्यानित्यत्ववादविरोध इति— तदप्युन्मत्तप्रलपितम् । जीवानां ब्रह्मातिरिक्तानामपि सर्वमते नित्यत्वांगीकारात् । अवस्थाद्वारकानित्यत्वस्य तत्राप्यंगीकाराच्च ॥

यदपि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधाद्युपपादनं तदपि मौढ्यात् । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति ? 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं भवति' 'येनेदं सर्वं विजानाति' इत्यादौ इदंशब्दसामानाधिकरण्येन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानस्य कार्यवर्गमात्रविषयत्वात् । गेहगोपुरमण्टपप्राकाराद्यात्मना परिणममानस्य अप्राकृतस्यापि भगवच्छरीरत्वपरिहारेण तत्रापि भगवता उपादानादिभूतेन सर्वविज्ञानप्रतिज्ञाविरोधाभावाच्च नित्यत्वं परिणामश्चेति विप्रतिषिद्धमिति चेत्— न ; पुनः प्रागवस्थाशून्यपरिणामेऽपि नित्यत्वविप्रतिषेधाभावात् ॥

एतेन 'ऐतदात्म्यमिदं सर्वं' इत्यादिभिराकाशस्येव वैकुण्ठस्यापि नित्यत्वमभ्युपेतव्यमिति प्रलपनमपि निरस्तम् । नित्यत्वश्रुतिसद्भावासद्भावाभ्यां वैषम्यात् । इदमिति प्रात्याक्षिकविविधाकारास्पदवस्तुविषयत्वाभिधानेन अप्राकृतवस्तुनः संप्र व्याघातवचनमप्युन्मत्तवचनं

न नित्येच्छापरिकल्पितत्वतदभावाभ्यां अव्याघातस्य सारसारादिषु प्राचीनैरेव परिहृतत्वाच्च । तस्मादप्राकृत सुरैर्वन्द्यम् '
इत्यादिश्रुतिस्मृतिप्रतिपन्नस्य वैकुण्ठस्य नित्येच्छापरिकल्पितत्वेन नित्यत्वं दुरपह्नवमिति दिक् ॥

इति श्रीशैलश्रीनिवासकृते विरोधनिरोधे

॥ विंशो निरोधः ॥



## अथ एकविंशो निरोधः

स्वप्नेऽपि निखिलानर्थान् जाग्रतादात्मलीलया ।
निर्माय क्रीडते यस्तु तस्मै भगवते नमः ॥

ननु न स्वाप्नानर्थान् भगवान् स्रष्टुमर्हति । तेषां मिथ्याभूतत्वेन तत्स्रष्टुः प्रतारकत्वप्रसङ्गात् । अतो जीवसृष्टत्वमेव तेषां युक्तमिति चेत् उच्यते । न जीवः स्वाप्नानामर्थानां स्रष्टा भवितुमर्हति । तेषां स्वप्ने द्रष्ट्रादिभाविष्यच्छुभाशुभसूचकत्वोक्तिविरोधात् । यथाऽऽह सूत्रकारः—
' सूचकश्च हि श्रुतेराचक्षते च तद्विदः ' इति । अत्र भाष्यम्– ' इतश्च स्वाप्ना अर्था न जीवसङ्कल्पपूर्वकाः । यतः स्वप्नोऽभ्युदयानभ्युदययोः सूचकः श्रुतेरवगम्यते । ' यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥ ' इति । ' अथ स्वप्ने पुरुषं कृष्णदन्तं पश्यति स एनं हन्ति ' इत्यादयश्च । स्वप्नाध्यायविदश्च स्वप्नं शुभाशुभयोः सूचकमाचक्षते । सूचकत्वं च स्वसङ्कल्पायत्तस्य नोपपद्यते । अशुभस्यानिष्टत्वात् शुभसूचकमेव दृष्ट्वा पश्येत् । अतः स्वप्ने सृष्टिरीश्वरेणैव कृता ' इति । ' न तत्र रथा रथयोगा न पन्थानो भवन्ति अथ रथान् रथयो

गान्पथस्सृजते ॥ न तत्र वेशन्ता पुष्करिण्यः स्रवन्त्यो भवन्ति अथ वेश. न्तान् पुष्करिण्यः स्रवन्त्यस्सृजेत स हि कर्ता ' इति ईश्वरसृष्टत्वाभिधा. नाच्च । नचात्र ' स हि कर्ता ' इति जीव एव किं न स्यादिति वाच्यम् । ' य एष सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदु नात्येति कश्चन ' इत्युपक्रमोपसंहारयोः परमात्मासाधारणधर्मश्रवणाद्वि रोधेन प्रागुक्तसूचकत्वाविरोधेन च जीवविषयकत्वानुपपत्तेः तत्रैव भाष्ये व्यक्तत्वात् । जीवगतसत्यसंकल्पत्वादेः रावस्थायां तिरोधा नस्य ' पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ' देहयोगाद्वा सोऽपि ' इत्याभ्यां सूत्रकारैरेवोक्तत्वेन तस्यैयेदानीं स्पष्टत्वाच्च ॥

यत्त्वेवं सति ' वैधर्म्याच्च न स्वप्नादिवत् ' इत्यनेन विरोधः प्रा ोति तत्र हि जाग्रदवस्थपदार्थज्ञानानां स्वाप्नपदार्थगोचरज्ञानानां च बाधितत्वा- बाधितत्वाभ्यां वैधर्म्यं हि भाष्य एव प्रतिपादितम् । स्वप्नज्ञानानि हि नि द्राऽऽदिदोषदुष्टकरणजन्यानि बाधितानि च । जागरितज्ञानानि तु तद्विपरीता नीति तेषां न तत्साम्य ' मित्यादिना । अतो विरोध इति केन चित्प्रलपि- तम्। तदपि माढ्यात् । सृत्याभिधानरूपनायां त- तदुत्तरसूत्रव्याख्यानपरे तत्रैव भाष्ये स्पष्टत्वात् । ' न भावोऽनुपलब्धेः इति हि तत् क्वचिदप्यनुपलब्धेः । नह्यकर्तृकस्य अकर्मकस्य वा ज्ञानस्य क्वचिदुपलब्धि' । स्वाप्नज्ञान पाधिकत्वं स्वाप्नादेर्मिथ्यात्वाभ्युपगमेनोक्तम् सूत्रकारैः तदेव हि नास्तीत्यु. च्यते । ' न भावोऽनुपलब्धे ' इति दृश्यते । अतस्तत्र विरोधोद्भावनम ज्ञानमूलकमेव ॥

एतेन ननु अर्थशून्यत्वादिकमन्यदेव अस्मदभिमतमिति न मिथ्या- त्वमर्थस्येति चेत्— तन्निर्वक्तुमर्हसि । किमर्थशून्यत्वं स्थिरान्यत्व लाक्ष- णिकेतरार्थशून्यत्वं वा ? आद्ये शून्यमतप्रवशः । द्वितीये जागरितज्ञानाना मपि तथात्वं दुर्वारम् । तृतीयेत्वसिद्धम् । सर्वेषामर्थानां क्षणिकत्वं त्व

दभिमतमित्यस्यार्थस्य एकादशे निरोधे प्रतिपादितत्वात् इत्येतदपि निराकृतम् क्षणिकत्वस्य प्रागेव निराकृतत्वाच्चेति दिक् ॥

इति श्रीशैलश्रीनिवासविरचिते विरोधनिरोधे

॥ एकविंशो निरोधः ॥



[इतःपर त्रीणि तालपत्राणि लुप्तानि । येषु द्वाविंशो निरोधः, त्रयोविंशनिरोधस्य आद्यभागश्च अलेखि । ]

र्तकत्वमयुक्तम् । निर्विकारस्य पुंसः प्रवर्तकानुपपत्तेः पुरुषोत्तमवदिति चेत् तथाऽपि अत्र हि सांख्यपक्षदूषणावसरे पुरुषस्य निर्विकारत्वात् प्रधानप्रवर्तकत्वमयुक्तमित्युक्तम् । तच्च ब्रह्मण्यपि समानमिति चेत्— उच्यते । सांख्यमते हि पुरुषस्य स्वतो ज्ञातृत्वानङ्गीकारेण दृक्छक्तिविकलस्य नान्यप्रवर्तकत्वम् । नात्र पङ्ग्वन्धन्यायः । पङ्गोः गमनशक्तिविकलस्यापि दृक्छक्तिवैकल्याभावात् । अन्धस्य दृक्छक्तिवैकल्येऽपि गमनशक्तिवैकल्याभावात् युक्ता परस्परसंयोगात् प्रवृत्तिः । इह तु पुरुष,प्रधानयोरुभयोरपि ज्ञातृत्वशक्तिवैकल्यात् सान्निधानमात्रस्याकिंचित्करत्वात् नित्यसंनिधानात् नित्यसर्गप्रसङ्गोऽपि स्यादिति पुरुषस्य ज्ञातृत्वविरहात्प्रवर्तकत्वमुक्तम् । 'अन्यथाऽनुमितौ च ज्ञशक्तियोगात् ' इति । परमात्मनस्तु सर्वज्ञस्य सत्यसंकल्पस्य युक्तमेवं सर्वत्र प्रवर्तकत्वम् । तथा च श्रूयते— 'अन्तःप्रविष्टश्शास्ता जनानाम् ' 'य आत्मानमन्तरो यमयति ' इति । स्मर्यते च- 'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ।' 'यतः प्रवृत्तिर्भूतानाम् ' 'इयतः प्रवृत्तिः प्रसृता पुराणी ' इति ॥

ज्ञातृत्वं च न विकाररूपमिति प्रागेवोक्तम् । एतेन यत् केन चिदुन्मत्तप्रसरेणोक्तम् ‘नतु दृष्टान्तभावात्’ इत्यत्र भोगसाधनत्वादीनि कानिचिच्छरीरलक्षणान्याशंक्य तेषामव्याप्त्यादिदोषानुक्त्वा नियामकत्व शरीर लक्षणमिति स्फुटीकृत्य कृत्स्नस्य चिदचिद्वस्तुजातस्य भगवच्छरीरत्वं निरूप्य ‘पुरुषाश्मवदिति चेत्तथाऽपि’ इत्यत्र ब्रह्मणो नियामकत्व दूषितमिति तदुन्मत्तप्रलपितमिति स्पष्टमेव । निर्विकारस्य पुरुषस्य सांख्याभिमतस्य प्रधानसान्निध्यात्प्रवृत्तिसंभवस्यैव दूषितत्वेन ब्रह्मणो नियामकत्वस्य अदूषितत्वात् । अत एव तत्सूत्रव्याख्यानपरयोः स्वपरभाष्ययोः उपष्टभकतयैकरूप्यप्रदर्शनमपि उन्मत्तवचनम् । तयोर्जीवमात्रविषयत्वात् ॥

यत्तु सांख्याभिमतमात्मविषयत्वमाशंक्य तदिद सपत्नीमातृवैधव्यमात्राभिलपनतुल्यतया उपहसन तदपि उन्मादविलसितम् । ननु नियामकत्व न तत्र दूष्यते । किंतु तत्रोक्तनिर्विकारत्वसाम्यात् नियामकत्वासंपत्तिरिति चेत्— तदप्युन्मादविलसितम् । ‘कर्ता शास्त्रार्थवत्त्वात्’ इत्यत्र विधिनिषेधशास्त्रावैयर्थ्याय जीवस्य कर्तृत्वं प्रसाध्य ‘परात्तु तच्छ्रुतेः’ इति यत्संकल्पायत्तं तदिति प्रसाधितम् भवतीत्युक्ते

त्वावश्यभावात् । ज्ञातृत्ववैकल्याद्धि सांख्याभिमतस्य प्रवर्तकत्वं निराकृतम् । नह्येवमात्मनो ज्ञातृत्ववैकल्यमस्मदभिमतम् ? येन तद्दूषणसाम्यमापतेत् । चैतन्यमात्रं ब्रह्मेतिवादिनस्तवैवायं दोष इति स्वबन्धनार्थरज्ज्वानेतुर्भ्रातानग्रपुत्रस्स्यादिति ॥

यत् शरीराभावान्नियामकत्वाभावकथनं तदप्युन्मादादेव । नियामकत्व शरीरमिति उपजीव्याविरोधं वदतो भवतः सर्वशरीरित्वे पुनरसन्देहस्य छलाविस्मरणरूपत्वात् । सांख्यदूषणस्य सपत्नीवैधव्यरूपतां त्वदुपरि पतितां अस्मास्वापादनमिव स्वाभिमतशरीरत्वमस्मास्वापाद्य दूषण तवोन्मत्तस्य भूषणमित्युपहसन्ति सन्तः । ‘अधिष्ठानानुपपत्तेश्च’ इत्यादिकमपि शरीरस्यैव जीवस्य जगत्कारणत्व वदतां शैवानामुपरि दूषणाभि.

धानपरम् नास्मन्मताविरोधीत्युक्तम् । अस्मन्मते भगवतस्सर्वशरीरत्वसर्वज्ञ. त्वसत्यसंकल्पत्वादिस्वीकारेण सर्वनियामकत्वादेः बहुधोपपादितत्वात् । स्व. रूपव्यपाश्रयमौदासीन्यम् ' ' मायाव्यपाश्रयं प्रवर्तकत्वमि ' ति त्वदीयसूत्र भाष्ये ' यदि किंचिदपि न करोति न कारयति च देही कस्तर्हि सर्वं का रयंश्च प्रवर्तत इति ? अत्रोच्यते —स्वभावस्तु प्रवर्तते । स्वभावो अविद्या लक्षणा माय' प्रवर्तन इति परमार्थः ' इति । गीताभाष्ये च अचेतना या मायायाः प्रवर्तकत्वं तत्प्रयुक्त निर्विकारस्य पुरुषस्य प्रवर्तनमिति एत· त्सर्वं हि सांख्यकपोलजलकणिकास्वादनस्तवैव विरुद्धमिति अलमनेन उन्- मत्तजनसंवादेन ॥

इति श्रीशैलश्रीनिवासविरचिते विरोधनिरोधे

॥ त्रयोविंशो विरोधोद्धारः ॥



## अथ चतुर्विंशो निरोधः

स्वाभाविकस्वरूपस्य य आत्मा प्रत्यगात्मनः ।
उपास्यश्चाप्युपेयश्च तमात्मानमुपास्महे ॥

ननु ' ब्रह्मविदाप्नोति परम् ' ' ब्रह्म वेद ब्रह्मैव भवति ' इत्यादि- भिः ब्रह्मोपासनं विहितम् । तच्च जीवादत्यन्तविलक्षणम् । अतः प्रत्यगात्मा. त्मतया उपास्यत्वमुच्यते । ' पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेना मृतत्वमेति ' इति प्रत्यगात्मपरमात्मनोर्भेदज्ञानं मोक्षसाधनमिष्यते । अत एव भेदस्य पारमार्थिकत्वमुद्घुष्यते । अतः कथमिदमुपपद्यते ? उच्यते— सत्य जीवादत्यन्तविलक्षणं ब्रह्म । सत्यं च भेदज्ञानं मोक्षहेतुरिति । तथा

ऽप्यसौ प्रत्यगात्मनोऽन्तरात्मतयैवोपास्य इति इति श्रुतिभिरेवोच्यत ।

तथा हि 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद अकृत्स्नो ह्येष ' इत्युक्तम् । कृत्स्नत्वापरिहाराय । किंतु अन्त रात्मतयोपासनम् । तच्च विशिष्टोपासनपर्यवसितम् । ' कारणं तु ध्येय ' इति विष्यन्त [illegible] । ततश्च प्रत्यगात्माविशिष्टोपासनरूपमपि भवतीति व्यक्त म् ' आत्मेति तूपगच्छन्ति ग्राहयन्ति च ' इत्यत्र भाष्ये । तथा च श्रीम द्भाष्यम्—' अन्तरात्मेत्येवोपासीत । प्रत्यगात्मा स्वशरीरस्य स्वयं यथा आत्मा तथा स्वात्मनोऽपि परं ब्रह्मेत्येवोपासीत इत्यर्थः । कुतः ? एवं ह्युपगच्छते पूर्वे उपासितारः ' त्व वा अहमस्मि भगवो देवते अहं वै त्वमसी ' ति । उपासितुरर्थान्तरभूतं ब्रह्मैवोपासितारोऽहमिति कथमभ्यु- पगच्छन्तीत्यत्राह— ग्राहयन्ति चेति । इममर्थमविरुद्धमुपासितॄन् ग्राह- यन्ति शास्त्राणि तान् प्रत्युपपादयन्तीत्यर्थः । ' य आत्मनि तिष्ठन्नात्मनो ऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति सत आत्माऽन्तर्याम्यमृतः ' इति ' सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदाय- तनास्सत्प्रतिष्ठाः ' ' ऐतदात्म्यमिद सर्वम् ' ' सर्वं खल्विदं ब्रह्म तज्जला- निति ' इति च सर्वस्य चिदचिद्वस्तुन. तज्जत्वात्तल्लत्वात्तदनत्वात्तन्नियम्य त्वात्तच्छरीरत्वाच्च सर्वस्यायमात्मा अतस्सत आत्मा । अतो यथा प्रत्य गात्मनस्स्वशरीरं प्रत्यात्मत्वात् देवोऽहम् मनुष्योऽहमित्यनुसन्धानम् तथा प्रत्यगात्मनोऽप्यात्मत्वात्परमात्मनः तस्याहमित्येवानुसन्धान युक्तमित्युक्त- मित्येव शास्त्रैरुपपादितम् । सर्वबुद्धीनां ब्रह्मैकनिष्ठत्वेन सर्वशब्दानां ब्रह्मैकनिष्ठत्वमभ्युपगच्छन्तः ' त्वं वा अहमस्मि अह वै त्वमासि ' इति व्यतिकरेणोक्तवन्तः ॥

एवं च ' अथ योऽन्यां देवतामुपास्ते अन्योऽसावहमन्योऽस्मीति न स वेद अकृत्स्नो ह्येष आत्मेत्येवोपासीत ' ' सर्वं तं परादा[illegible] स्सर्वं वेद ' इत्यात्मत्वानुसन्धानाननुसन्धाननिषेधः । ' पृथगात्मानं प्रेरितारं च मत्वा ' इति पृथक्त्वानुसन्धानं चाविरुद्धम् । अहमिति

स्वात्मतयाऽनुसन्धानात् अन्यत्वानुसन्धाननिषेधो रक्षितः । स्वशरीरात् स्वात्मनोऽधिकत्वानुसन्धानवत् स्वात्मनोऽपि परमात्मनोऽधिकत्वानुसन्धानात् पृथक्त्वानुसन्धानविधान च रक्षितम् । अधिकस्य ब्रह्मणः प्रत्यगात्मनः आत्मत्वात् तस्य च ब्रह्मशरीरत्वात् निषेधवाक्ये 'अकृत्स्नो ह्येष' इत्युक्तम् । अत उपासितुरात्मत्वेन ब्रह्मोपास्यमिति स्थितम्' इति ॥

एतदुक्तं भवति । यथा 'नक्षत्रानूयाजा इज्यन्ते' इति हेतुनिर्देशात् औपभृतदुष्टगृहीतं चतुर्गृहीतद्वयरूपं तत्रैकं चतुर्गृहीतं प्रयाजार्थमेकमनूयाजार्थमिति निर्णीयते, तद्वत् 'अकृत्स्नो ह्येष' इति हेतुनिर्देशात् 'आत्मेत्येवोपासीत, इत्यन्तरात्मतया विशिष्टोपासनविधिपरमवसीयते । तथा हि सति कृत्स्नस्योपास्यान्तर्गतत्वात् ब्रह्मोपासितुरकृत्स्नताव्यावृत्तिर्भवति श्रुत्यन्तरानुगुण्यं च भवति । पृथक्त्वानुसन्धानासिद्ध्यविरोध. । पूर्वानुसन्धात्रा चानुगुण्य च ॥

अत एव भूमविद्यायां 'यत्र नान्यत्पश्यति नान्यत् शृणोति न अन्यद्विजानाति स भूमा' इत्यादिना भूमस्वरूपस्यैव 'स एवाधस्तात्' इति तस्य सर्वात्मतामुक्त्वा तदेतत्तादात्म्य नाभेदकृतम् अपि तु शरीरात्मभावकृतम् इति दर्शयितुम् 'अथात आत्मादेश आत्मैवाधस्तात्' इत्यादिना अन्तर्यामित्वमुपपाद्य तस्यैव अहमित्युपास्यतां वक्तुं 'अथातोऽहंकारः—स एवाधस्तात्' इत्युपदिष्टम् । जीवात्मत्वाविशिष्टोपासने उपास्यकोटिप्रविष्टसुखदुःखादे· यथाक्रम मुक्तावतिप्रसंगमाशङ्क्य, नेद जीवस्य स्वाभाविक रूपमपि तु अपहतपाप्मत्वादिगुणकम्, अतो न दुःखादावतिप्रसंग इति दर्शयितुं दहरविद्यायां प्रजापतिवाक्ये जीवस्य मुपवर्ण्यते । तदाह सूत्रकारः—'उत्तराच्चेदाविर्भूतस्वरूपस्तु इति । अत· स्वाभाविकस्वरूपस्यैव मुक्तावनुवर्तनात् अनागन्तुकानां दुःखादीनां कर्मप्रयुक्तानां न्मतैरित्येव निवृत्ते. न काश्चिद्विरोध इति ॥

एतेन यत्तु केन चिदुन्मत्तशिरोमणिना प्रलपितम्— जीवात् परम, र्थतो भिन्नं ब्रह्मैव वेदान्तवेद्यं मुमुक्षूपेयं परमार्थं नान्यदिति आमूल चूडमुद्घुष्टम्। जीवस्य तु उपेयत्वमुक्तम्। 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इत्यत्र तु प्रजापतिविद्यावाक्यस्य जीवमात्रपरत्वमभ्युपगच्छता प्रत्यगात्म नोऽपि वेदान्तवेद्यत्वं मुमुक्षूपेयत्वं परत्वञ्च चाभ्युपगतम् ततश्च विरोध इति— तदज्ञानमूलकमिति स्फुटमेव सिद्धान्तविदाम्॥ नहि प्रजापति-वाक्यं जीवस्य स्वातन्त्र्येण उपासनविधायकम्? अपि तु उपकोसल विद्याऽङ्गत्वेनाग्निविद्याया इव दहरविद्याऽङ्गत्वेन जीवस्वरूपप्रतिपादनम् विशिष्टोपासने विशेषणभूतजीवस्वरूपनिरूपणस्यापेक्षितत्वात्॥

अत एव सूत्रकारेणापि 'इतरपरामर्शात्स इति चेत' इत्याक्षिप्य 'नासंभवात्' इति सूत्रखण्डेन परिहारः कृतः। कथं तर्हि ब्रह्मय प्रकरणे 'एष सम्प्रसादो अस्माच्छरीरात्समुत्थाय, परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति जीवपरामर्शः? इत्याशङ्क्य, मुक्तस्वरूपाविर्भा-वयितृत्वलक्षणपरमात्ममाहिमप्रदर्शनार्थो जीवपरामर्शः इति अनेन सूत्रेण उपपादितम्॥

अत एव तत्रैवोत्तरत्र अनुपद 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यम्' इति 'तानि ह वा एतानि त्रीण्यक्षराणि सत् ति यमिति तद्य त्सत् तदमृतम् अथ यत्ति तन्मर्त्यम् अथ यंच तेनोभौ यच्छति', इति मुक्तामुक्तनियन्तृत्वरूपप्रवृत्तिनिमित्तेन सत्यशब्दवाच्यता ब्रह्मणः प्रस्तूयते अतः प्रत्यगात्मनः स्वाभाविकरूपविशिष्टस्य उपास्यकोट्यन्तर्भावात् तस्य ज्ञातव्यत्वादिकमुत्तरत्रोच्यमानं न विरुद्धम्॥

एतेन 'य आत्मा अपहतपाप्मा विरज' इत्यादिना निरस्तसम स्तदोषत्वं कल्याणगुणाकरत्वं चोक्तम्। 'सोऽन्वेष्टव्यः' इत्यादिना तस्यैव वेदान्तवेद्यत्वमुक्तम्। 'सर्वांश्च कामान्' इत्यनेन तद्वेदनस्य मुक्तिरूपफलं चोक्तम्। 'द्वात्रिंशतं वर्षं ब्रह्मचर्यमावहति' इत्यादिना,

इन्द्राविरोचनयोः प्रत्यगात्मविज्ञानाङ्गत्वेन ब्रह्मचर्यविधानात् तत्स्वरूपस्य दुर्बोधत्वं गुरुव....नादेस्तद्वेदनसाधनत्वं चोक्तम् ॥

'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेतिहोवाच एतदमृतम-भयमेतद्ब्रह्म' इत्यादिना जाग्रत्स्वप्नसुषुप्त्यवस्थाऽऽपन्नप्रत्यगात्मस्वरूपस्यामृतत्वाभयत्वब्रह्मत्वोक्त्या प्रत्यगात्माऽतिरिक्त पर तत्वं नास्तीति च व्यंजितम् इन्द्रस्य प्रकर क्त्या पुनरुपदेशेन प्रत्यगात्मस्वरूपस्य दुरधिगमत्वं श्रोतुरसंभावना च दर्शिता ।

एवमेव 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इत्यनेन तस्यैवावस्थात्रयोत्तीर्णस्य परिशुद्धस्य पुरुषोत्तमत्वं च दर्शितम् । तस्मात् कृत्स्नप्रजापतिवाक्यपर्यालोचनायां प्रत्यगात्मन एव वेद्यत्वं मुमुक्षूपेयत्वं च स्थितमिति-कस्य चित्प्रलपलपनमपास्तम् । प्रत्यगात्मनो निर्दोषगुणाकरत्वोपास्यत्वादे-दृष्टत्वात् ।

अत एव 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इत्यत्र उपास्यब्रह्मस्व-रूपवत् उपास्यजार्यस्वरूपस्यापि ज्ञातव्यत्वमुक्तम् ॥ अत एव च गुणोपसंहारपादे— 'एक आत्मनदशरीरे भावात्' इत्यनेन कर्तृत्वभोक्तृत्वादिगुणविशिष्टमात्मानमुपास्यमेके मन्यन्ते' इति पूर्वपक्षं कृत्वा, 'व्यतिरेकस्तद्भावभावित्वात्' इत्यनेन अपहतपाप्मत्वादिस्वाभाविकगुणवत्तयैवासौ उपास्य इति सिद्धान्तितम् । अतो जीवात्मन उपायत्वमस्मादिष्टमेव तस्यैवोपास्यत्वमिति उन्मत्तप्रलपनमनुपादेयम् । सकलश्रुतिस्मृतिसूत्रसन्दर्भविरुद्धत्वादिति व्यक्तं भाष्यादिषु ॥

वस्तुतस्तु इदं न कस्यापि मतम् । सगुणब्रह्मोपासनवादिनस्तथा-त्वनाभिमतत्वात् । इदं तु वक्तव्यम् । 'अन्तस्तद्धर्मोपदेशात्' इत्यत्र

'अन्तर उपपत्तेः' इत्यत्र च यस्याक्षिस्थत्वित्व निराकृतं तस्यात्र 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच' इति अक्ष्यन्तर्वर्तित्वं कथमुच्यते ? कथ वा तद्धर्माणाममृतत्वाभयत्वादीनां ब्रह्मशब्दस्य चोपपत्तिः ? इति ॥

अत्रेदं तत्वम् । नेहाक्ष्यन्तर. परमात्मा भवितुमर्हति । 'एवं त्वेव भूयोऽनुव्याख्यास्यामि' इत्यादिना प्रागुक्तस्यानुव्याख्याने स्वप्नाद्यवस्थानां जीवासाधारणानां अभिधानात् अमृतत्वादिकमपि देहप्रयुक्तमर्त्यत्वाद्यसंस्पर्शमात्राभिप्रायकम् उपक्रमानुसारात्प्रकरणानुसाराच्च ॥

अत एव 'मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तस्य शरीरस्यामृतस्यात्मनोऽधिष्ठानम्' इति तत्रोत्तरत्राच्यते । अभयत्वमपि मृत्युभयाद्यनाक्रान्तत्यम् । ब्रह्मत्वमप्यसंकुचितज्ञानाश्रयस्वात् ब्रह्मत्वाश्रयतया उपपन्नम् । अपहतपाप्मादिगुणसबन्धाद्वा ब्रह्मेति व्यपदेशः । सेनान्यां राजेवाग्रमिति वदत एव तथाविधाकारविशिष्टत्वेन तस्यान्वेष्टव्यत्वं जिज्ञास्यत्व दुर्ज्ञेयत्व च अभिप्रेतम् ॥

यत्तु 'स उत्तमः पुरुषः' इति तस्यैवावस्थात्रयोत्तीर्णस्य पुरुषोत्तमत्वमित्युक्तम् तत् अतिस्थवीयः । 'स उत्तमः पुरुष.' इत्यत्र तच्छब्देन पूर्ववाक्ये 'पर ज्योतिरुपसपद्य' इति उपसंपाद्यतयोक्तस्य परस्य ज्योतिपः 'नारायणपर ज्योति' रित्युक्तस्य नारायणस्यैव 'ज्योतिश्चरणाभिधानात्' इत्यत्रोक्तस्य पुरुषोत्तमस्वाभिधानात् । उत्सर्गतस्सर्वनाम्नां प्रधानपरामर्शित्वस्य क्लृप्तत्वात् अत्यन्तसन्निहितत्वेन तस्यैव परामर्शौचित्याच्च प्राप्यतया परमात्मा प्रधानभूतः संप्रसादशब्दितात् जीवात् सन्निहितश्च ॥

ननु 'प्रजापतिर्वरुणायाश्वमानयत् स स्वां देवतामार्छत्' इत्यत्र तच्छब्देन सन्निहितस्य संप्रदानतया प्रधानस्यापि न वरुणपरामर्शः । अपि तु प्रथमान्तनिर्दिष्टस्य प्रजापतेरेव परामर्शः । विभक्तिना साजा-

त्यादिति निर्णीतं मीमांसकैः ॥ 'आकाशाच्चन्द्रमसं स सोमो राजा भवति' इत्यत्र तच्छब्देन सन्निहितस्यापि न चन्द्रमसः परामर्शः, अपि तु त्रयाणाम् । गच्छतु पुंस एवेत्युक्तं वेदान्तिभिः । अतः कथमुक्तं सन्निहितस्य प्रधानस्य ज्योतिषः परामर्श इति चेत्—न । तत्र तु समानविभक्तित्वेन तच्छब्देन प्रजापतेर्ग्रहणम् । अपि तु सन्निहितस्य प्रधानस्य वरुणस्य ग्रहणासंभवात् । तथा हि 'स्वस्वान्देवतां आच्छेदिति तच्छब्दार्थस्य स्वीयदेवतावेश उच्यते । स्वदेवताकत्वं च स्वकर्तृककर्मोद्देश्यकत्वम् । कर्मचेह प्रजापतिकर्तृकमश्वदानम् । तच्च स्वस्वत्वध्वंसपूर्वकपरस्वत्वापाददनम् । वरुणो न प्रजापतिः । स्वस्मिन् स्वभेदविरोधात् । अपि तु वरुणायेति संप्रदानचतुर्थीनिर्दिष्टवरुण एव देवता । नच वरुणो वरुणस्य देवता भवितुमर्हतीति सन्निहित प्रधानमपि वरुणमुल्लंघ्य प्रजापतिरेव दूरस्थोऽपि गृहीतव्यः तच्छब्देन । एवं च 'वरुणो वा एतं गृह्णीत' इति निर्देशोऽप्युपपद्येत ॥

एवं 'सोमो राजा भवति' इत्यत्रापि तच्छब्देन चन्द्रमसो ग्रहणे तस्मिन् स्वतः सोमराजत्वाविशिष्टे पुनस्तद्विरोधवैयर्थ्यात् सन्निहितमपि हाय मुक्तपरता श्रुता । इह तु तद्विपरीतम् । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' स्मृतिविरोधः । प्रसिद्धिविरोधश्च जीवपरत्वे । परमात्मपरत्वे तु न विरोधः । अपि तु सन्निहितप्रधानपरामर्शित्वानुग्रह एवेति तस्यैव ग्रहणं युक्तम् ।

एवं सत्येव 'स तत्र पर्येति' इत्यत्र तत्रत्यब्रह्मपरामर्श उपपद्येत । अन्यथा हि किं तत्परामर्शोदिति यत्किंचिदेतत् । विस्तरस्तु तत्वमार्ताण्डे दहराधिकरणे द्रष्टव्यः ॥

यदपि 'प्राणोऽस्मि प्रज्ञाऽऽत्मा तं मा आयुरमृतमित्युपास्व' इति इन्द्रेण प्रतर्दनं प्रति प्रत्यगात्मस्वरूपमेवोपदिष्टमिति— तदप्यपास्तम् । प्राणस्य 'अत एव प्राणः' इत्यत्र परमात्मपरत्वनिर्णयेन तत्समानाधिकरणानां

पदान्तराणामपि तत्पर्यन्ततायाः 'अहं मनुरभवं सूर्यश्च—कक्षीवानहम्' इत्यादिवामदेवव्यवहारवदुपपत्तेः 'शास्त्रदृष्ट्यातूपदेशो वामदेववत्' इति सूत्रकारैरेवोपात्तत्वात् । शास्त्रदृष्टिर्हि शरीरात्मभावनिवन्धनदृष्टताद्रास्य-दृष्टिः ननु वास्तवभेददृष्टिः । तथा सत्यभेदेनेति वक्तव्ये वक्रोक्तिवैय-र्थ्यादिति अन्यत्र विस्तरः ॥

इति श्रीशैलश्रीनिवासविरचिते विरोधनिरोधे
॥ चतुर्विंशो निरोधः ॥



## अथ पंचाविंशो निरोधः

आविर्भावतिरोभावौ यदनुग्रहनिग्रहौ ।
जीवज्ञानस्य कुरुतस्तमुपास्यमुपास्महे ॥

ननु कोऽयं जीवधर्मभूतज्ञानस्य तिरोभावो नाम ? किमुत्पत्तिप्राति बन्धो विद्यमानस्य ध्वंसो वा ? नाद्यः, नित्यत्वानभ्युपगमात् । अत एव न द्वितीयः । भावस्यानुत्पन्नस्य ध्वंसानंगीकाराच्च । 'संपद्याविर्भा-व' इत्यत्र तस्यैव मुक्तिरूपत्वोक्त्या मुक्तेरसत्यत्वप्रसंगादिति चेत्—उच्यते आविर्भावतिरोभावौ हि नित्यस्यापि धर्मभूतज्ञानस्य संकोचविकासौ वै-शद्यावैशरूपाविति नोत्पत्तिविनाशविकल्पः कल्पते । नित्यस्यापि ज्ञानस्य संकोचविकासौ संभवत इति प्रागेव सम्यगुपपादितम् तत्वमार्ताण्डे सम्यग्विस्तृतं च ॥ यथाऽऽह शौनकः—

तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥

इति ॥ 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुत्या धर्मभूत

ज्ञानस्य नित्यतायाः 'अविद्याकर्मसञ्ज्ञाऽऽन्या तृतीया शक्तिरिष्यते तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसहिता ॥' इति तत्तिरोधानस्य च प्रमाण प्रतिपन्नत्वात् । तिरोधानं च विषयसङ्कोच एव । न नाशरूपः ॥

एतेन प्रथमाधिकरणे 'अविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितमिति वदता स्वरूपनाश एवोक्तस्स्यात् । प्रकाशतिरोधानं नाम प्रकाशोत्पत्ति प्रतिबन्धो विद्यमानस्य विनाशो वा ? प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधान प्रकाशनाश एव' इति ब्रह्मस्वरूपवादिमतं दूषयित्वा 'पराभिध्यानात्तु तिरोहितम्' इत्यत्र जीवस्याविद्यारूपतिराधानमुक्तम् ततश्च विरोध इति कस्याचित्प्रलपितमप्यपास्तम् । स्वरूपातिरिक्तप्रकाशाङ्गीकारानङ्गीकाराभ्यां प्रकाशस्य सविषयत्वनिर्विषयत्वाभ्यां अत्यन्तवैलक्षण्याच्च । धर्मभूतं हि ज्ञानं स्वरूपातिरिक्तं सविषयं च । तस्य च तिरोभावोऽपि विषयसंकोचः । सच कर्मोपाधिकः न स्वाभाविकः । स्वाभाविकत्वं च सर्वविषयेष्वप्रतिबन्ध । वृत्त्या स्फुरति । स एवाविर्भावः नापूर्वोत्पत्तिः अतो न मोक्षस्यानित्यत्वप्रसंगः । अन्यथा त्वत्पक्षेऽप्यविद्यानिवृत्तेः जन्यत्वात् अनित्यत्वप्रसगः । अपुरुषार्थप्रसंगस्त्वधिकः । स्वभावरूपत्वात्तत्पूर्वकस्वभावस्थितिर्मोक्ष इति तु समानमिति दिक् । अतः 'पराभिध्यानात्' इत्यत्र अविद्यया स्वरूपतिरोधानमिति कस्याचित्प्रलपनमपास्तम् ॥ अत एव तादृशस्थलविरोधोद्भावन मूर्खोन्मत्तप्रलपितमनुपादेयम् ॥

इति श्रीशैलश्रीनिवासकृते विरोधनिरोधे

॥ पञ्चविंशो निरोधः ॥



## अथ षड्विंशो निरोधः

नित्यलीलाविभूतिभ्यां निर्मिताभ्यां निजाज्ञया ।
क्रीडत्यानन्दयन् सर्वान् यस्तमानन्दमाश्रये ॥

नन्वस्तु नित्यविभूतिरूपा प्रत्यक्षादिप्रमाणसिद्धा । नित्यविभूतौ तु न किंचित्प्रमाणम् । तस्याः प्रामाणिकत्वेऽपि वा नित्याया गोपुरमण्टपाद्यात्मना परिणामः कथम् ? कथं वा तस्याः भगवदिच्छापरिकल्पितत्वम् ? उक्तं हि तस्यास्तथात्वं भाष्ये । 'परस्य ब्रह्मणः परिपूर्णस्य सर्वगतस्य सत्यसंकल्पस्य स्वेच्छापरिकल्पितस्वासाधारणाप्राकृता नाम नात्यन्ताय न सन्ति इत्यतो' भगवतो लीलाविभूत्यतिरिक्त विभूत्यन्तरं तस्य नित्यत्वं च युक्तमिति चेत्— उच्यते । विभूत्यन्तरसद्भावे तावदस्ति प्रमाणम् । 'ऋचोऽक्षरे परमे व्योमन्' 'यो वेद निहितं गुहायां परमे व्योमन्' 'क्षयन्तमस्य रजसः पराके' 'देवानां पूरयोध्या' 'वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः । आस्ते' इत्यादिपरस्सहस्रामिति प्रागेवोक्तम् । स्वेच्छाकल्पितत्वेऽपि नित्येच्छाकल्पितत्वान्नित्यत्वमप्यविरुद्धमिति प्राचार्येषु सम्प्रदायग्रन्थेषु व्यक्तम् । 'आपश्चाहि— ब्रह्मलोके' 'ऐरंमदीय सरः' 'तदश्वत्थस्सोमसवनः' 'तदपराजिता पूः आपो ब्रह्मणः प्रभुविमितं हिरण्मयम्' इत्यादिछान्दोग्यादिश्रुतिभिश्च तस्य गोपुरमण्टपप्राकारसरोवृक्षार्णवादिपरिणामयुक्तत्वं चावगतम् । अतो भगवन्नित्येच्छापरिकल्पित ब्रह्मलोकवैकुण्ठायोध्याऽपराजिताऽऽदिशब्दित नित्यविभूत्याख्यं द्रव्यान्तरं तत्वमुक्ताकलापादिषु आचार्यपादैरनुगृहीतम् । तथा हि—

द्रव्याद्रव्यप्रभेदान्मितमुभयविधं तद्विदस्तत्वमाहुः
द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ ।
अन्त्यं प्रत्यक्पराक्च प्रथममुभयथा तत्र जीवेशभेदात्
नित्या भूतिर्मतिश्चेत्यपरमिह जडामादिमां केचिदाहुः ॥

इति, ‘ षोढा त्रिगुणानेहोजीवेश्वरभोगभूतिमतिभेदात् ’ इति च ॥

इयांस्तु विशेषः । नित्येच्छापरिकल्पितानि कानि चिन्नित्यानि रथ गोपुरप्राकारादीनि । कानि चित्तत्कालमात्रभोग्यानि वस्तून्यानित्येच्छा-परिकल्पितानि अनित्यानि । अतः संकल्पादेव तु ’ इत्यत्र जीवस्यापि सत्यसकल्पत्वस्य मुक्तावस्थायामाविर्भावात् धात्रादिलोकरूपाणामानित्यत्वेपि न वैकुण्ठलोकस्यानित्य त्वप्रसगः केन चिदुन्मत्तेन प्रलपितो नादर्तव्य ॥

अत एव ‘ तन्वभावे सन्ध्यवदुपपत्तेः ’ ‘ भावे जाग्रद्वत् ’ इत्यनयोः सूत्रयोः जीवस्य स्वसकल्पकृततन्वभावे मुक्तौ स्वप्नदशायामिव ईश्वरसक ल्पजन्यान्विषयान् भुङ्क्ते । तनुसद्भावे तु स्वसकल्पकृतान्भुङ्क्ते इत्युक्त्या वैकुण्ठस्यानित्यत्व स्पष्टीकृतम् । न हि जीवेश्वरभोग्यविषयातिरेकेण वैकुण्ठो नाम कश्चिदस्ति ’ इति प्रलपनमपि परास्तम् ॥

यदपि अनित्यस्य किंचिदुपादान आवश्यकम् । न च माया तदु पादानम् अप्राकृतत्वविरोधात । न च परिणाम्युपादानान्तरमस्ति ? माया ऽऽख्यप्रकृत्यतिरिक्तपरिणाम्युपादानस्याप्रामाणिकत्वात् । त्वयाप्यनभ्युपगमाच्च । त्वयाऽपि हि तत्वत्रयमेवांगीकृत, न तत्वचतुष्टयम् । अतो गत्यन्तराभावात् अतः जीवेश्वरसकल्पतज्जन्यपरिणामत इत्यकामेनापि स्वीकर्तव्यम् । अन्यथा वैकुण्ठगतिविषयाणां प्राकृतत्वप्रसगात् ।

इत्थमेकत्र जीवब्रह्मणोः परिणामप्रतिषेधात् अन्यत्र स्वीकाराच्च वि रोध इति यदुक्तम्— तदयुक्तम् । अचित्परयोः मिश्रसत्वशुद्धसत्वमयत्वेन द्वैविध्यस्य तयोरुभयोः परिणामस्य च स्वीकारेण सर्वदूषणोद्धारात् । सकल्पस्तु ज्ञानविशेषरूपो निमित्त नोपादानम् । स च नित्यः अतः न तद्रूपेण जीवस्य ब्रह्मणो वा परिणामप्रसगः । विषयाणां तु प्राकृताचि-त्परिणामरूपाणां अप्राकृतत्वं दुरपह्नवम् । अतो नाप्राकृतत्वप्रतिज्ञाविरोधः नापि तत्वचतुष्टयांगीकारप्रसगः न वा गत्यन्तराभावः । ब्रह्मणः परि-

णामित्व न कश्चिद्व्यक्तमिति न काश्चिद्विरोधः ॥

इति श्रीशैलश्रीनिवासविरचिते विरोधनिरोधे

॥ षड्विंशो विरोधोद्धारः ॥

## अथ सप्तविंशो निरोधः

निसर्गाच्चिदचिद्वर्गवैलक्षण्यैकलक्षणः ।
श्रीवत्सलक्षणश्श्रीमान् अस्तु मे प्रस्तुताप्तये ॥

नन्विदमयुक्तम् । 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यभेदः समनाधिकरणानिर्देशादवगम्यते । नचासौ राजा राष्ट्रमितिवत् निर्वाह्यनिर्वाहकभावेन वा, सुवर्णं कुण्डलमितिवत् उपादानोपादेयभावेन वा ब्राह्मणोऽहमितिवत् शरीरशरीरिभावेन वा, अन्यथासिद्धश्शङ्कितु शक्यः । — आद्ये सामानाधिकरण्यस्य अमुख्यत्वप्रसंगात् । द्वितीये केवलस्यानुपादेयत्वात्, विशिष्टपरत्वे च त्वमिति निर्देशविरोधात् । विशेषणाभिप्रायेण तथा निर्देशे च मध्यमोत्तमयोः त्वमास्मिपदोपात्तयोः पुरुषयोः विरोधात । पुरुषवचनयोरुद्देश्यविशेष्यानुसारित्वात् इह च ब्रह्मण एवोद्देश्यविशेष्यत्वात् । तत्र प्रथमपुरुष एव न्याय्यः ॥

अत एव न तृतीयः । त्वमहमर्थयो शरीररूपतया शरीरवाचिनां शब्दानां शरीरिपर्यन्ततया प्रथमपुरुषस्यैवौचित्यात् । 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यादौ तथैव दर्शनात् । 'युष्मद्युपपदे समनाधिकरणे स्थानिन्यपि मध्यमः' 'अस्मद्युत्तमः' इत्यत्र युष्म-

दस्मदर्थावसायिनि सामानाधिकरण्यस्य मध्यमोत्तमयोर्विधानात् । इह च तत्पदार्थभूते ब्रह्मणि पर्यवसानात् ॥

न च भेदश्रुतिविरोधान् बाध. । तासामौपाधिकभेदपरतयाऽन्यथा सिद्धत्वान् । अत. तद्वैलक्षण्यं भगवतः स्वाभाविकमित्येव युक्तमिति चेत् उच्यते— भेदस्तावत् स्वाभाविक' । 'पृथगात्मान प्रेरितार च मत्वा जुष्ट स्ततेनामृतत्वमेति' इनि मुक्तिहेतुज्ञानाविषयतया तस्यानौपाधिकत्वावगमात्

अत एव 'निरञ्जनः परमं साम्यमुपैति' इत्यादौ मुक्तौ साम्य फलत्वेन अनुभूयते । साम्यं हि तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपं भेदाविनाभूतम् । नच 'समयोत्पन्नाविमौ' इत्यादिषु समशब्द; एकशब्द पर्यायोऽपि दृष्ट इति साम्यमैक्य कि न स्यादिति कस्य चित्प्रलपितमाद तंव्यम् । पिको घट इति प्रयोक्तव्ये समो घट इत्यप्रयोगेग समशब्दस्य पिकशब्दपर्यायत्वासिद्धे. ।

नच अनेकार्थत्वापनोदाय तदप्रयोगश्शक्यः । पिकशब्दस्यापि 'एके मुख्यान्यकेवला' ' इति कोशेन अनेकार्थतया सन्देहनाप्रयोगप्रसगात् । — संख्यायां प्रसिद्धिप्राचुर्यात् तत्प्रयोग इति चेन्— तर्हि तत एव प्रसिद्धि- प्राचुर्यात् साम्य सादृश्यरूपमेव स्यात् ॥

किं च 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता.' इति गीताव चने एतदुपबृंहणरूपे साम्यशब्दस्य साधर्म्यशब्देन विवरणात् न साम्य मैक्यमिति कल्पना युक्ता ॥

अत एव पारम्याविशेषणात् साम्यमैक्यमेवेति कल्पनमपि परास्तम् । विशेषणस्य विशेष्यताऽतिशयाधायकस्य तद्विरोध्यन्तराथान्तरगमकत्वादर्श- नात् । 'परमात्मा परं ब्रह्म' इत्यादावपि तथात्वप्रसगेन सर्वलोकवि- रोधाच्च ॥ न च ब्रह्म वेद ब्रह्मैव भवति' इत्याद्यभेदफलश्रुत्यविरोधाय

नामैक्यमास्त्विति कल्पनमपि युक्तम् । तत्रापि 'इवबद्वैषमेवाथ' तथा 'यथेव साम्ये' इत्याद्यनुशासनानुरोधेन 'विनाशमेवाप्स्यति' इत्यत्र एव कारस्य सादृश्यार्थकत्वेनाविरोधात् ॥

नचैवम् 'एवे चानुयोगे' इति परमापात्तिशंक्या । 'अनियोग' इत्यनेन अनवक्लृप्त्यर्थकत्वावेदनेन इह सादृश्यार्थकत्वेऽपि अनवक्लृप्त्यर्थकत्वाभावात् । 'नच वाहाहैवयुक्ते' इत्यत्रेवात्रापि पररूपाप्रसक्तिः एवम् 'अन्यमीशम्' 'अन्योऽन्तर आत्माऽऽनन्दमयः' 'अनश्नन्नन्यः' 'ज्ञाज्ञौ द्वावजावीशनीशौ' इत्यादिप्रत्यक्षश्रुतिभ्यां च कण्ठतो भेदावगमात् पारमार्थिकी । मुक्तौ प्रसाधनापगमेऽपि साम्यश्रुत्या भेदावगमात् तस्यौपाधिकत्वोक्तिरयुक्ता ॥

अत एव अज्ञत्वशेपत्वशरीरत्वादिलिंगविरोधात् 'तत्त्वमसि' इत्यादि वाक्यगम्यं सामानाधिकरण्य गमयितुमीष्ट । विशिष्टाभेदे तु न विशेषण विशेष्ययोर्भेदेन सहविरोध. ॥ यत्तु अत्र त्वमहमर्थावसायिसामानाधिकरण्यगमवगभकास्यस्मिपदोपादानासंगतिरित्युक्तं तत्तुच्छम् । इदानीमपि त्वमहमर्थावसायित्वापरित्यागात् । इयास्तु भेद । परपक्षे त्वमहंशब्दौ मध्यमोत्तमयोस्तु युष्मदस्मत्प्रयोगानिमित्त न तदर्थविशेषः । तदर्थबोधक सर्वनामादिप्रयोगेऽपि तददर्शनात् ॥

ननु सत्य युष्मदस्मत्प्रयोग तन्निमित्तामिति । तथाऽपि 'त्वं वा अहमास्मि' 'अह वै त्वमसि' इत्यादिषु उभयो. प्रयोगे पुरुषप्रयोगानियमवारणाय उद्देश्यसमर्पकत्वमापि तत्ताद्विशेषण देयम्, तथा च इहोपादानोपादेयभावविवक्षायां वा परमात्मवाचिन तत्पदस्यैव उद्देश्यसमर्पकत्व तु भध्यमोत्तमयोरनुपपत्तिपरिहार इति चेत् सत्यम्; उभयोरपि तत्त्वमाद्यो, पदयोः परमात्मपरत्वाविशेषे त्वमहपदयोरेव अत्रापि उद्देश्यसमर्पकत्वसभवेन पुरुषव्यवस्थाविरोधाभवात् । प्रकरणानुसारेण तथात्वस्यौचि-

त्वाच्च । 'ऐतदात्म्यमिदं सर्वम्' इत्युपक्रमे हि सर्वोद्देशेन परमात्मा त्मकत्वं विधीयते । तदेवात्र तदन्तर्गताचिद्विशेषे श्वेतकेतौ निगम्यते । 'तत्त्वमसि' इति । तदात्मकस्त्वमसीत्यर्थः ॥

ननु शरीरवाचिनां शरीरपर्यन्तत्वं लोकन्यायसिद्धम् ननु शरीरवाचकानां शरीरिपर्यन्तत्वमिति कथमुक्तार्थसंभव इति चेत् सत्यं शरीरिपर्यन्तत्वमेव । तत्पदं त्वंपदेन समानाधिकरणम् तेन पर्यवसितोऽयमर्थं इत्यदोषात् । तदेतदाभिप्रेत्योक्तं श्रीभाष्ये— 'तत्त्वमसि' इत्यत्र उद्देश्य विधेयभावः कथमिति चेत— नात्र किंचिदुद्दिश्य किमपि विधीयते । 'ऐतदात्म्यमिदं सर्वं' मित्यनेनैव प्राप्तत्वात् अप्राप्ते हि शास्त्रमर्थवदिति । तस्मात् 'ऐतदात्म्यमिदं सर्वम्' इति सामान्येनोक्तस्यार्थस्य 'तत्त्वमसि' इति विशेषे उपसंहारः' इति । एतत्तत्वं तु प्रागेव सम्यगुपपादितम् अतो नास्ति भेदाभेदश्रुत्योर्विरोधः, विरोधेऽपि वा उपक्रमाधिकरणन्यायेना विरोधाधिकरणन्यायेन च असंजातप्रतिपक्षत्वात् अभेदश्रुतीनामेव प्रथम पस्थितानां स्वार्थपरत्वमुचितम् नाभेदश्रुतीनाम् ।

नचात्रापच्छेदन्यायेन उत्तरप्राबल्यं शक्यम् । अनियतपौर्वापर्यविषयत्वाच्चस्य । इह तु नियतपौर्वापर्यकत्वात् ।

यत्त्वत्र केन चित्प्रलपितम्— आखण्डलार्जुनयोः दाशरथिपरशुरामयोः दहरवैश्वानरयोश्च तत्ताद्विरुद्धधर्माश्रितत्वात् अपच्छेदन्यायेन प्राबल्यामित्युक्त इहत्वन्यथेति विरोधो दुर्वार इति तदनुक्तानुवादत्वात् अयुक्तत्वाच्चान्मत्त प्रलपितम् । आखण्डलार्जुनयोः जीवयोः परस्परविलक्षणत्वात् । स्वर्गित्वादीनां कर्मविशेषप्रयुक्ता । साच कास्मन्नात्मन्यपि जन्मभेदेन दृष्टानामौपाधिकतया नाश्रयभेदकता । नरत्वदेवत्वादिभेदात् भेद इत्यप्युन्मत्त विलसितम् । शरीरनिष्ठानां तेषां आत्मभेदानौपयिकत्वात् । परशुरामस्य भारतोक्तहविर्विनिमयौपाधिकशरीरत्वे जीवत्वे च नास्त्यभेदः । साक्षाद्भग

वद्रूपत्वे च नास्ति भेदः। दहरवैश्वानरयोरपि वैश्वानरशब्दितजाठराग्नि-शरीरस्य दहराकाशहार्दपरमात्मनश्च नास्ति भेदे प्रमाणम्। द्युमूर्धत्वादि गुणभेदसूचनस्य आकारभेदगमकत्वेन विद्याभेदकत्वेऽपि नाश्रयभूतब्रह्म-भेदकत्वम्। अत आखण्डलार्जुनयोर्भेदस्य रघुरामपरशुरामयोरभेदस्य च प्रामाणिकत्वात्तत्र तद्धर्माणां शब्दान्तराणामवस्थाभेदेनान्यथासिद्धत्वात् तेषां भेदतः प्रमाणता युक्तेति सर्वमनवद्यम्॥

इति श्रीशैलश्रीनिवासविरचिते विरोधनिरोधे
॥ सप्तविंशो निरोधः॥



दोषगवेषणशीलाः भाष्येभाष्ये परैरदूष्ये च।
आदित्यइवदिवाऽन्धाः सद्गुणविद्भिः पर बहिष्कार्याः।

त्रयीवधूहृद्वथुव्यथाकथाविधूननायोधसमेधितोक्तिषु।
विरोधमाधातुमुशन्ति ये भृशं प्रशान्तिरेषूत्कटकण्टकेष्विव॥

प्रच्छन्नबौद्धजनबद्धविरोधयूथदुष्कण्कौघमुखभंगकृते कृतिर्मे।
श्रीभाष्यरत्नमयाचित्रपदत्रयापमासाद्य संप्रति मुदं प्रददातु सद्भ्यः॥

त्रय्यन्तोदन्तदन्तावलमलघुबलं यः प्रसह्याधिरुह्य
श्रमिद्धाप्याभिधानं स्वमणिमाणिमितरप्रश्रयं नाश्रयन्ते।
वहन्तः पथि परकथिताभेदवृत्तेषु तेषु
आवृत्त्या भुवने सत्पथायोद्भवेयुः॥

विरोधदुष्कण्टकनाशनाय मद्दत्तया पादुकयाऽनयाऽत्र।
धात्राऽप्रधृष्यं समुपेत्य भाष्यं पश्यन्तु हृष्टा बुधाः प्रधानाः॥

इति श्रीशैलकुलतिलकसर्वतन्त्रस्वतन्त्रश्रीनिवास
तातयाचार्यतनूभवेन लक्ष्मणांबागर्भशुक्तिमुक्तामणिना
कौण्डिन्यश्रीनिवासदीक्षितकृपाकटाक्षवीक्षासमासादित
मीमांसाद्वयनिश्चप्रचज्ञानेन निजाग्रजाण्णयार्य
निरवग्रहानुग्रहलब्धचतुस्तन्त्रतन्त्रियान्त्रित
मानसेन श्रीनिवासविदुषा समार्थिता
श्रीमद्भाष्यपादुका समाप्ता ॥

